# YĀJÑIKYUPANIṢAD-
# VIVARAṆA

BY

PURUṢOTTAMĀNANDATĪRTHA



THE AD[illegible] LIBRARY AND RESEARCH CENTRE

*The Adyar Library Series—No. 71*

GENERAL EDITOR:

G. SRINIVASA MURTI, B.A., B.L., M.B & C.M., VAIDYARATNA

*Director, Adyar Library*

# YĀJÑIKYUPANIṢAD-VIVARAṆA

BY

## PURUṢOTTAMĀNANDA TĪRTHA

# याज्ञिक्युपनिषद्विवरणम्

## पुरुषोत्तमानन्दतीर्थकृतम्

# YĀJÑIKYUPANIṢAD-VIVARAṆA

BY

## PURUṢOTTAMĀNANDATĪRTHA

EDITED BY

PANDIT V. KRISHNAMACHARYA

AND

PANDIT K. RAMACHANDRA SARMA

THE ADYAR LIBRARY

1949

# INTRODUCTION

THE *Yājñikyupaniṣad* with a commentary in the form of *Kārikās* by S'rī Puruṣottamānandatīrtha is now published for the first time. The edition is based on a single manuscript found in the Adyar Library; so far no other manuscript of this commentary has come to our notice. The *Yājñikyupaniṣad* is also known as *Nārāyaṇopaniṣad*. There is the *Mahānārāyaṇopaniṣad* belonging to the *Atharvaveda*, edited by Col. Jacob, which has been utilised by Bloomfield in preparing his Vedic Concordance. The latter is only another version of this *Yājñikyupaniṣad*.

The *Taittirīyayajurveda* is divided into the *Saṁhitā* and the *Brāhmaṇa* portions. The Brāhmaṇa has the three *Prapāṭhakas* for the main *Brāhmaṇa* portion, and then the *Āraṇyaka* portion. Sāyaṇa divides the *Āraṇyaka* into ten *Prapāṭhakas*, and the three *Prapāṭhakas*, 7 to 9 form what is well known as the *Taittirīyopaniṣad*. The next one is accepted as a *Khila* (supplement) and that is the *Yājñikyupaniṣad*. Bhaṭṭabhāskara takes the whole of the *Taittirīyopaniṣad* as a single *Pras'na*, and there is also a slight difference in him from the arrangement of the *Pras'nas* found in Sāyaṇa. Otherwise the texts are the same.

S'aṅkarācārya comments only on the three *Pras'nas* of the *Upaniṣad* and he calls them the three *Vallīs*, namely, the *Sikṣā*, *Brahmānanda* and *Bhṛgu*. Raṅgarāmānuja follows the same order as Bhaṭṭabhāskara, and comments on the

*Yājñikyupaniṣad* too. Sāyaṇa accepts the *Taittirīyopaniṣad* portion as having two main sections, the *Sāṁhityupaniṣad* and the *Vāruṇyupaniṣad*. The latter is in two *Prapāṭhakas*. There is no difference in the text; the difference is only in nomenclature. Sāyaṇa takes the *Yājñikyupaniṣad* as a natural squence of the *Taittirīyopaniṣad*. His colophons are as follows:

इति श्रीमत्सायणाचार्यविरचिते . . . . कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये (1) सांहित्यामुपनिषदि (2) वारुण्यपरनामधेयसांहित्यामुपनिषदि ब्रह्मवल्ल्याख्यो द्वितीयोऽनुवाकः ; ब्रह्मवल्ल्याख्यस्तृतीयोऽनुवाकः ।

Regarding the significance of the term *Yājñikyupaniṣad*, there is a slight difference between Sāyaṇa and Bhaṭṭabhāskara. Their respective explanations are given below:

Sāyaṇa

चतुर्थप्रपाठके यज्ञोपयुक्ता अपि मन्त्रास्तत्र तत्राम्नाताः । अतस्तद्रूपोपनिषद्याज्ञिकी ।

Bhaṭṭabhāskara

अयं समस्तः प्रश्नो याज्ञिक्य उपनिषद उच्यन्ते, यज्ञात्मना भगवता नारायणेन दृष्टत्वात् नारायणप्रतिपादकत्वात् ।

About the contents and divisions of the *Upaniṣad*, Sāyaṇa makes the position clear:

सेयं तैत्तिरीयोपनिषत् त्रिविधा । सांहिती वारुणी याज्ञिकी चेति । तत्र प्रथमप्रपाठके संहिताध्ययनस्योक्तत्वात् तद्रूपोपनिषत् सांहिती । द्वितीयतृतीययोः प्रपाठकयोर्या ब्रह्मविद्याभिहिता तस्याः संप्रदायप्रवर्तको वरुणः । तस्मात्तदुभयरूपोपनिषद्वारुणी । चतुर्थप्रपाठके etc.

The colophons call the *Upaniṣad* both *Yājñikyupaniṣad* and also *Nārāyaṇopaniṣad*, in Sāyaṇa:

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्युपनिषदि ।

Both Sāyaṇa and Bhaṭṭabhāskara say that in the *Taittirīyopaniṣad* proper S'*ikṣā* is the subject matter of the first of three sections, though Bhaṭṭabhāskara does not divide the text into three sections. In the beginning of the second section, Bhaṭṭabhāskara says that it is *Ānandavallī*. The words of Bhaṭṭabhāskara in the beginning of the two sections are:

(1) वर्णाद्यनुशासनं शिक्षाशास्त्रमवसरे अवधानार्थं स्मारयति ।

(2) इयमानन्दवल्ली आनन्दब्रह्मणो वैभवप्रतिपादनार्था ।

He does not say anything about the third section. He simply starts the explanation of the passage: भृगुर्वै वारुणिः

The commentary now published is a very lucid one, in simple *Kārikās*, with an occasional note in prose on the *Kārikās*. I do not know if these prose notes formed a part of the commentary or are only additional notes added later by another person. We know only the name of the author and nothing more. He pays homage to S'ivarāmatīrtha in the 2nd verse in the beginning. In the first verse he refers to ancient Teachers in the Advaita tradition. The manuscript on which the edition is based was written on the 11th day in the bright half of *Ās'vina* on a Tuesday in the Vikrama year 1718, S'aka year 1583 (1661 A.D.) by Gaṅgādhara son of Vis'vanātha (a great astronomer).

The third verse in this commentary appears (with very slight variation) in the commentary of Sāyaṇa, and the following verses are only verse adaptations of the passages in Sāyaṇa. I cite the passage from Sāyaṇa for comparison with the verses in this commentary.

वारुण्युपनिषद्युक्ता ब्रह्मविद्या ससाधना ।
याज्ञिक्यां खिलरूपायां सर्वशेषोऽभिधीयते ॥

यथा बृहदारण्यके सप्तमाष्टमाध्यायौ खिलकाण्डत्वेनाचार्यैरुदाहृतौ तथेयं नारायणीयाख्या याज्ञिक्युपनिषदपि खिलकाण्डरूपा तल्लक्षणोपेतत्वात् । कर्मोपासनब्रह्मकाण्डेषु त्रिष्वपि यद्यद्वक्तव्यमवशिष्टं तस्य सर्वस्याभिधानेन प्रकीर्णरूपत्वं खिलत्वम् ।

At the end of the commentary, in verses 543 ff. the author says that his commentary is practically a metrical abridgment of the elaborate commentary of Sāyaṇa.

विद्यारण्यमुनिप्रोक्तबृहद्व्याख्यानुसारतः ।
पुरुषोत्तमतीर्थेन ग्रन्थविस्तरभीतितः ॥
याज्ञिक्यां कतिचिन्मन्त्रा व्याख्याताः पद्यरूपतः ।
यथोपयोगमेवात्र संग्रहेण यथामति ॥
विद्यारण्यैः समस्तेयं व्याख्याता याज्ञिकी शुभा ।

There is only one copy of the manuscript in the Adyar Library and no other copy is known elsewhere. It is a paper manuscript bearing the shelf number 40-B. 38. There are 36 folia, the commentary beginning on the second page of the first folio. The commentary ends on the fourth line on the first page of the last folio. There are on an average 11 lines a page and 32 syllables a line. The manuscript contains both the text and the commentary. The writing is quite legible; the matter is fairly correct, corrections are carried out in the margins. The manuscript begins : श्रीगुरुभ्यो नमः । श्रीगणेशाय नमः before the *Kārikā* श्रीरामं काशिकाकान्तम् । The name of the author comes at the end of the commentary in Kārikā 543. He says that he has followed the Southern recension : द्राविडः पाठ आदृतः (545).

The Vikrama and the S'aka years given do not agree; I gave the figures that appear in the manuscript.

This *Nārāyaṇopaniṣad* must be differentiated from the Upaniṣad of the same name included in the *Vaiṣṇavopaniṣads*

of the Adyar Library Series as No. 9, which too belongs to the *Yajurveda.*

Pandit V. Krishnamacharya and Pandit K. Ramachandra Sarma have prepared this edition from the manuscript available in the Adyar Library with their usual care, and this is an addition to many contributions from them in the Adyar Library Series. When the manuscript was brought to my notice, I felt that this requires to be published, having regard to the importance of the text and the special nature and the lucidity of the commentary. The Vasanta Press has finished the printing with great promptness, at the same time keeping up their standard.

*Adyar Library*
10th December, 1949 C. KUNHAN RAJA

---

# उपोद्घातः

" ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा ॥ "

इति प्रधानतया सर्वसंप्रतिपन्नासु दशसूपनिषत्स्वन्यतमा तैत्तिरीयोपनिषत् । सा चारण्यकस्य पञ्चमषष्ठप्रपाठकरूपा । प्रथमः प्रपाठकोऽस्याः शिक्षावल्ली, आनन्दवल्ली, भृगुवल्ली चेति त्रिधा विषयतो विभिन्नः । द्वितीयस्तु 'अम्भस्य पारे' इत्यारभ्य 'तस्माद्ब्रह्मणो महिमानमित्युपनिषत्' इत्यन्त इत्येव द्राविडदेशे संप्रदायसमागतः क्रमः । एतं क्रममनुसृत्यैव भगवत्पादशंकराचार्याः प्रथमस्य प्रपाठकस्य, भट्टभास्करादयः प्रपाठकद्वयस्य च भाष्यमभाषिषत । तत्र द्वितीयः प्रपाठको याज्ञिक्युपनिषदिति नारायणोपनिषदिति च क्वचित्क्वचिद्व्यवह्रियते । एवं स्थिते सायणाचार्यैः प्रथमप्रपाठकस्थास्तिस्रो वल्लीः पृथक्पृथक्संख्याकान् प्रपाठकान् परिकल्प्य आरण्यकस्यान्तिमौ द्वौ प्रपाठकौ पञ्चमषष्ठात्मना पठित्वा उपनिषद्भागं सप्तमादिदशमान्तांश्चतुरः प्रपाठकान् मन्यते । गुरुशिष्यसंप्रदायागतेऽध्ययनक्रमे कथमियान् भेदः संजात इति विस्मयावहमिदम् ।

अस्य विवरणस्य कर्ता पुरुषोत्तमानन्दतीर्थ आत्मानं श्रीशिवरामानन्दतीर्थशिष्यं स्वयमेव निर्दिशति । अस्य विशिष्य कालनिर्णये न पर्याप्तं प्रमाणमुपलभ्यते । परंतु विद्यारण्यमनुसृत्य विवरणमिदं कुर्वतानेन स्वस्य

तदनन्तरकालिकत्वं विवृतं भवति । इदं च मुद्रणम् अडयार्-पुस्तकालयस्थमेकमेव कोशमवलम्ब्य साधितम्[1] । तस्यान्त्ये कोशलेखनसमयः सं १७१८, शक १५८३ इत्युक्तः । स च समयः अङ्गलसंवत्सररीत्या 1661 A.D. इति समायाति । आतः प्रायशः पञ्चदशे षोडशे वा अङ्गलाब्दशतके ग्रन्थकर्तायं बभूवेति वक्तुं पार्यते । अडयार्-पुस्तकालये वेदान्तसिद्धान्तचूडामणिरिति कश्चनामुद्रितो ग्रन्थस्तालपत्रेष्वान्ध्रलिप्यां लिखितो वर्तते । तत्र चान्ते "इति श्रीशिवरामानन्दतीर्थपूज्यपादशिष्य . . . . विरचितो वेदान्तसिद्धान्तचूडामणिः समाप्तः" इति दृश्यते । तत्र 'शिष्य' इत्यस्यानन्तरं ग्रन्थकर्तृनाम त्रुटितम् । प्रायेण सोऽपि ग्रन्थोऽनेनैव पुरुषोत्तमानन्दतीर्थेन कृतो भवितुमर्हतीत्यस्ति वितर्कितुमवकाशः ।

वे. कृष्णमाचार्यः

[1] See for the details of this MS. K. Madhavakrishna Sarma's notes on MSS. published on page 31, Vol. V. part I of the *Adyar Library Bulletin*, 1941.

## तैत्तिरीयोपनिषदि

# याज्ञिक्युपनिषद्विवरणम्

### श्रीपुरुषोत्तमानन्दतीर्थविरचितम्

श्रीरामं काशिकाकान्तं शंकराचार्यमुत्तमम् ।
सुरेशं वार्तिकाचार्यं नौमि विद्यागुरूनपि ॥ १ ॥

ब्रह्मामृतप्रचुरशंकररस्यराज-
द्रामायणामृतरसज्ञरसज्ञविज्ञान् ।
श्वःश्रेयसप्रदकृपानिलयान् प्रणौमि
श्वःश्रेयसाय महते **शिवरामतीर्थान्** ॥ २ ॥

वारुण्युपनिषद्युक्ता ब्रह्मविद्या ससाधना ।
याज्ञिक्यां खिलरूपायां सर्वशेषो विधीयते ॥ ३ ॥

बृहदारण्यके यद्वत्सप्तमाष्टमयोर्मतम् ।
खिलकाण्डत्वमत्रापि याज्ञिक्यास्तद्वदिष्यते ॥ ४ ॥

वक्तव्यमवशिष्टं यत्कर्मकाण्डादिषु त्रिषु ।
तत्सर्वमुच्यते यत्र तस्य स्यात्खिलकाण्डता ॥ ५ ॥

अम्भस्य पार इत्यादौ ब्रह्मतत्त्वं समीरितम् ।
उपास्तिरुक्तादित्यो वा एष इत्यादिके हरेः ॥ ६ ॥

कर्माण्युक्तानि भूरन्नमित्यादौ तत्र कर्मणाम् ।

बाहुल्याद्याज्ञिकीत्येषा ननु चोपनिषत्कथम् ॥ ७ ॥
आदौ ब्रह्मोक्तितोऽन्ते स्यात्तद्धीहेतूक्तितश्च सा ।

आदाविति । अन्त इति; अन्ते च ब्रह्मज्ञानसाधनोक्तेः, सा; उपनिषद्भवतीत्यर्थः ॥

**अम्भस्य पारे भुवनस्य मध्ये**
**नाकस्य पृष्ठे महतो महीयान् ।**
**शुक्रेण ज्योतींषि समनुप्रविष्टः**
**प्रजापतिश्चरति गर्भे अन्तः ॥**

आदावाद्यानुवाकस्य ब्रह्मतत्त्वावबोधिकाः ॥ ८ ॥
ऋचः काश्चन तत्रैषा प्रथमा संप्रवर्तते ।
जलस्य परतीरे यो लोकालोकादिको महान् ॥ ९ ॥
यः पृथिव्यादिलोकस्य मध्ये मेर्वादिको महान् ।
स्वर्गलोकस्य पृष्ठे यो ब्रह्मलोकादिको महान् ॥ १० ॥
ततोऽप्यस्मात्समन्ताच्च महेशः स्यान्महत्तरः ।
अनुप्रविष्टश्चेतांसि जीवचैतन्यरूपतः ॥ ११ ॥
गर्भे ब्रह्माण्डरूपेऽन्तर्विराड्रूपोऽवतिष्ठते ।
मायया व्यापकोऽपीशो ब्रह्माण्डस्थो विराट्तया ॥ १२ ॥
देहेषु जीवरूपेण स्थित इत्यर्थ ईरितः ।

जलस्य ; समुद्रजलस्येत्यर्थः । विराट्तया; विराड्रूपेणेत्यर्थः ।

अग्निर्मूर्धा चक्षुषीति विराड्रूपं च मुण्डके ॥ १३ ॥
अग्निः प्रकाशसंयुक्तो द्युलोकोऽत्राभिधीयते ।

इति मुण्डके कथितमित्यर्थः ।

**यस्मिन्निदं सं च विचैति सर्वं**
**यस्मिन् देवा अधि विश्वे निषेदुः ।**
**तदेव भूतं तदु भव्यमा इदं**
**तदक्षरे परमे व्योमन् ॥**

समेति च व्येतिचेदं यस्मिन्नव्याकृते जगत् ॥ १४ ॥
समुत्पन्नं संगतं स्यात्सृष्टिकालेऽथ संहृतौ ।
विलीनं विगतं च स्याद्यस्मिन्नव्याकृतेऽधिके ॥ १५ ॥
अधिशब्दोऽधिकार्थः स्यादधिका इति युज्यते ।
देवा हिरण्यगर्भाद्या निषेदुर्नितरां श्रिताः ॥ १६ ॥
तदेवाव्याकृतं भूतमतीतं जगदुच्यते ।
भविष्यद्वर्तमानं च तदेवासीदिदं जगत् ॥ १७ ॥
आसीदर्थक आकारो यद्वाश्चर्यस्य वाचकः ।
तदप्यव्याकृतं नित्ये समुत्कृष्टे परात्मनि ॥ १८ ॥

श्रुतौ शं चेति पाठे सुखमपि प्राप्नोतीत्यर्थः । व्यत्ययेन वा समिति द्रष्टव्यम् ।

**येनावृतं खं च दिवं महीं च**
**येनादित्यस्तपति तेजसा भ्राजसा च ।**
**यमन्तःसमुद्रे कवयो वयन्ति**
**तदक्षरे परमे प्रजाः ॥**

पूर्वमव्याकृतं प्रोक्तं परब्रह्मसमाश्रितम् ।
तेनोपहितचैतन्यं जगद्धेतुरिहोच्यते ॥ १९ ॥
येनान्तरिक्षलोकश्च द्युलोको व्याप्त उच्यते ।
भूलोकश्च चकाराभ्यां देहास्तल्लोकवासिनः ॥ २० ॥

तपत्यनुगृहीतः सन् येनेशेनाखिलं जगत् ।
स्वीयभास्वररूपेण कुरुते संप्रकाशितम् ॥ २१ ॥
रश्मिलक्षणदीप्त्या च संतप्तं कुरुते रविः ।
तत्त्वज्ञा जगतो मध्ये तन्तूनिव वयन्ति यम् ॥ २२ ॥
यथा पटस्वरूपे च तन्तवोऽनुगतास्तथा ।
जगत्यनुगतं ब्रह्म सदा पश्यन्ति सूरयः ॥ २३ ॥
तद्ब्रह्म नित्ये परमे स्वस्मिन् स्थित्वा सृजेत्प्रजाः ।
स्वरूपेऽवस्थितिश्चास्य स्वे महिम्नीति संश्रुता ॥ २४ ॥
आधारान्तरराहित्यं भवेत्स्वस्मिन्नवस्थितिः ।

**यतः प्रसूता जगतः प्रसूती**
**तोयेन जीवान् व्यससर्ज भूम्याम् ।**
**यदोषधीभिः पुरुषान् पशूंश्च**
**विवेश भूतानि चराचराणि ॥**

पूर्वमव्याकृतोपाधि यच्चैतन्यं समीरितम् ॥ २५ ॥
जगत्कारणता तस्य मन्त्रेऽस्मिन् संप्रपञ्च्यते ।
यस्मात्प्रसूतिर्जगतोऽव्याकृतोपहितात्मनः ॥ २६ ॥
प्रसूता संप्रवृत्ता स्यादीकारश्छान्दसः श्रुतौ ।
तत्पञ्चभूतैरसृजद् देहान् भूम्यां नरादिकान् ॥ २७ ॥

व्यचसर्जेति पाठेऽपि व्यससर्जेत्येव विज्ञेयम्। विशेषेणासृजदित्यर्थः ।

यद् व्रीह्याद्युपलक्ष्यान्नं भूत्वा देहांश्चराचरान् ।
विवेश नरपश्वादीन् वृक्षादौ वृष्टिरूपतः ॥ २८ ॥
प्रवेशोऽभ्युपगन्तव्यस्तेनेदं पालितं जगत् ।

श्रुतावपेक्षितं पूरयति—तेनेति । चैतन्येनेत्यर्थः । श्रुतिस्थभूतानी-त्यस्य व्याख्या देहानिति ।

**अतः परं नान्यदणीयसꣳहि**
**परात्परं यन्महतो महान्तम् ।**
**यदेकमव्यक्तमनन्तरूपं**
**विश्वं पुराणं तमसः परस्तात् ॥**

निरूप्यतेऽत्र शुद्धं तत्कारणत्वोपलक्षितम् ॥ २९ ॥
हिरण्यगर्भाद्युत्कृष्टाद्यद्वस्तूत्कृष्टमुच्यते ।
महतो गगनादेर्यन्महान्तं महदीरितम् ॥ ३० ॥
सजातीयादिरहितमिन्द्रियादेरगोचरम् ।
अपरिच्छिन्नरूपं च समस्तजगदात्मकम् ॥ ३१ ॥
अनादिसिद्धं तमसः पृथग्यद्वस्तु वर्तते ।
अतोऽन्यत्परमुत्कृष्टमतिदुर्लक्ष्यवस्तु न ॥ ३२ ॥

न, नास्तीत्यर्थः ।

**तदेवर्तं तदु सत्यमाहु-**
**स्तदेव ब्रह्म परमं कवीनाम् ।**
**इष्टापूर्तं बहुधा जातं जायमानं**
**विश्वं बिभर्ति भुवनस्य नाभिः ॥**

समस्तजगदात्मत्वमुक्तं यत्तत्प्रपञ्च्यते ।
यच्चिन्तनं यथावस्तु तदृतं परिकीर्तितम् ॥ ३३ ॥
वाचा तदुक्तिः सत्यं स्याद्ब्रवेद्ब्रह्मैव तद् द्वयम् ।
विबुधानां परं श्रेष्ठं प्रमाणत्वेन सत्कृतम् ॥ ३४ ॥

ब्रह्म वेदात्मकं वस्तु तदेव ब्रह्म कीर्तितम् ।
यागादि वैदिकं स्मार्तं वापीकूपादि कर्म च ॥ ३५ ॥
ब्रह्मैव लोकस्याधारो दधाति सकलं जगत् ।
अतोऽधिष्ठानरूपं स्यादाधेयं सकलं जगत् ॥ ३६ ॥

भुवनस्य नाभिरित्यस्यार्थमाह—लोकस्याधार इति । बहुधेत्यादि बिभर्तीत्यन्तस्यार्थमाह—दधातीति । धत्त इत्यर्थः ।

**तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ।**
**तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः ॥**

तदेवाग्न्यादिकं शुक्रं नक्षत्राद्यमृतं सुधा ।
हिरण्यगर्भब्रह्मापि तदेव परिकीर्तितम् ॥ ३७ ॥
आपः पञ्चापि भूतानि विराडाख्यप्रजापतिः ।
तदेव तदधिष्ठानं ब्रह्मैव परिकीर्त्यते ॥ ३८ ॥
अविद्यादृष्टितो यद्यद्भाति नानाविधं जगत् ।
विद्यादृष्ट्या समस्तं तद्ब्रह्मैवाखण्डमुच्यते ॥ ३९ ॥

तदेवाग्निरित्यदि चन्द्रमाइत्यन्तस्यार्थमाह—तदेवेति । ब्रह्मैवेत्यर्थः । शुक्रामृतपदयोरर्थमाह—शुक्रमित्यादिसुधेत्यन्तेन । शुक्रं दीप्यमानमिति वाच्यार्थः ॥

**सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।**
**कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥**
**अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम् ।**
**स आपः प्रदुघे उभे इमे अन्तरिक्षं चापि सुवः[1] ॥**

[1] अथो सुवः इत्येव प्रायिकः पाठः ।

"प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम ।"

इति कलस्य नित्यत्वाद् ब्रह्मतास्य न हीति चेत् ॥ ४० ॥

अविद्यादृष्टिविषयं पुराणवचनं हि तत् ।

विद्यादृष्ट्या तु कालस्य ब्रह्मरूपत्वमिष्यते ॥ ४१ ॥

इत्यभिप्रेत्य तस्यापि तस्मादुत्पत्तिरुच्यते ।

निमिर्वसति येष्वक्ष्णः पक्ष्मपातेषु ते स्मृताः ॥ ४२ ॥

निमिषा निमिषा एव निमेषाः परिकीर्तिताः ।

निमिर्नाम जनकस्य पूर्वज आद्यो मिथिलेश्वर आसीदित्युपनिपदि वर्तते । स देववरप्रसादात् पक्ष्मपातेषु तिष्ठतीति ज्ञेयम् ।

पक्ष्मपातप्रमाणोऽयं कालो निमिषशब्दितः ॥ ४३ ॥

ते स्वप्रकाशात्संपूर्णात्परेशादधिजज्ञिरे ।

निमेषेभ्योऽधिकाः काष्ठाः कलास्ताभ्योऽधिका मताः ॥ ४४ ॥

अष्टादश निमेषास्तु काष्ठा इत्यादिकस्मृतेः ।

चकाराभ्यामनुक्तस्य लवादेरपि संग्रहः ॥ ४५ ॥

तच्च सर्वेश इत्युक्त्या विस्पष्टं परिकीर्तितम् ।

लवत्रुट्यादिकाः सर्वे समुत्पन्नाः परात्मनः ॥ ४६ ॥

नलिनीपत्रसंहत्यां सूक्ष्मसूच्या विभेदने ।

दले दले तु यः कालः स कालो लववाचकः ॥ ४७ ॥

लवैस्त्रुटिः स्यात् त्रिंशद्भिरित्याद्युक्तं मनीषिभिः ।

पक्षमासादयः सर्वे महेशादधिजज्ञिरे ॥ ४८ ॥

संवत्सरो महेशानात्कल्पतां प्रभवादिकः ।

समुत्पन्नोऽत एवायं समर्थः स्वप्रयोजने ॥ ४९ ॥

कल्पन्तामिति पाठेऽपि सर्वे कालविशेषाः स्वस्वप्रयोजनसमर्था इति योज्यम् ।

स कालोपहितस्तत्तत्कालौचित्येन दुग्धवान् ।
जलोपलक्षितां पृथ्वीं प्राणिनामभिकाङ्क्षितम् ॥ ५० ॥
भोग्यं संपादयामास पृथिव्यां परमेश्वरः ।

स आपः प्रदुघ इत्यस्य तात्पर्यमाह—प्राणिनामित्यादिना ।

अन्तरिक्षं सुवः स्वर्गमपि चेमे उभे अपि ॥ ५१ ॥
प्रदुघे स्थानयोर्भोग्यं तयोरजनयत्प्रभुः ।

अपिचेति अथोशब्दार्थः ।

**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।**
**न तस्येशे कश्चन तस्य नाम महद्यशः ॥**
**न संदृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा मनीषा मनसाभिक्लृप्तो**
**य एनं विदुरमृतास्ते भवन्ति ॥**

कालादिसर्वहेतुत्वात्सर्वत्रानुगतत्वतः ॥ ५२ ॥
कुतो न गृह्यते सर्वैरिति चेत्तन्न युज्यते ।
ऊर्ध्वाद्याकारराहित्याद्रूपादेरप्यभावतः ॥ ५३ ॥
पुरुषः कश्चिदप्येनं न गृह्णात्यूर्ध्वताकृतिम् ।
तिर्यगाकारयुक्तं वा क्वचिन्मध्ये स्थितं च वा ॥ ५४ ॥
तस्यात्मनो न कोऽपीशे नेष्ट इत्यर्थ ईरितः ।
मम ग्रहणसिद्ध्यर्थं त्वमीदृग्रूपवान् भव ॥ ५५ ॥

इति तं परमात्मानं नियन्तुं न हि शक्नुयात् ।
अत एवात्मनो नाम महद्यश इति स्थितम् ॥ ५६ ॥
अतिस्वातन्त्र्यतस्तस्य यशसोऽभ्यधिकत्वतः ।
न दृष्टिविषये रूपं तिष्ठत्यस्य परात्मनः ॥ ५७ ॥
कुशलोऽपि पुमान् कश्चिच्चक्षुषा तं न पश्यति ।
कथं ब्रह्मावबोधः स्यादिति चेदभिधीयते ॥ ५८ ॥
लौकिकार्थमनोवृत्तीर्यदीष्टे तेन चेतसा ।
निश्चितो हृदयस्थेन परमात्मा भवेदयम् ॥ ५९ ॥
मनो हि योगयुक्तं सद्वृत्तीरन्या नियच्छति ।
तेनैकाग्रेण मनसा परमात्मानुभूयते ॥ ६० ॥
एकाग्रमनसैनं ये साक्षात्कुर्वन्ति ते नराः ।
देहात्प्राणविनिष्क्रान्तिर्मरणं तद्विवर्जिताः ॥ ६१ ॥

**अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ ॥**

उक्तार्थस्य दृढत्वाय प्रदेशान्तरवर्तिनः ।
मन्त्रानुदाहरत्यद्भ्यः संभूत इति वाक्यतः ॥ ६२ ॥
अद्भ्यः संभूत इत्येतत्प्रतीकग्रहणं कृतम् ।
प्रदर्शनार्थं कृत्स्नस्यानुवाकस्येति मन्यताम् ॥ ६३ ॥
तत्रानुवाके प्रोक्तं हि य एवमिति वाक्यतः ।
मरणेन विहीनत्वं ब्रह्मविज्ञानशालिनः ॥ ६४ ॥

"य एवं विद्वानमृत इह भवति" इति वाक्येनेत्यर्थः ।

हिरण्यगर्भ इत्याद्या ऋचोऽष्टौ याः समीरिताः ।
संहितायां चतुर्थे हि काण्डे त्वाद्यप्रपाठके ॥ ६५ ॥

आत्मोपलक्षकत्वेन सूत्रादेरभिधानतः ।
ता अप्यत्रोपयुक्ताः स्युरित्येवमवगम्यताम् ॥ ६६ ॥

प्रपाठके या उक्तास्ता अप्यत्रोपयुक्ताः। तत्र हेतुः, आत्मेत्यादिः ॥

**एष हि देवः प्रदिशोऽनुसर्वाः**
**पूर्वो हि जातः स उ गर्भे अन्तः ।**
**स विजायमानः स जनिष्यमाणः**
**प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः ॥**
**विश्वतश्चक्षुरुत विश्वतोमुखो**
**विश्वतोहस्त उत विश्वतस्पात् ।**
**सं बाहुभ्यां नमति सं पतत्रै-**
**र्द्यावापृथिवी जनयन् देव एकः ॥**

यथा हिरण्यगर्भाद्याः परमात्मोपलक्षकाः ।
तथा जगद्विराट् चैनमात्मानमुपलक्षयेत् ॥ ६७ ॥
एष स्वयंप्रकाशात्मा प्राच्याद्याः सकला दिशः ।
अनुप्रविश्य स्थितवान् प्रसिद्धं हि प्रवेशनम् ॥ ६८ ॥
हिरण्यगर्भरूपत्वात्पूर्वोत्पन्नः स एव हि ।
ब्रह्माण्डरूपगर्भस्य मध्येऽसावेव वर्तते ॥ ६९ ॥
प्रत्यङ्ङन्नमयादिभ्योऽप्यान्तरः स महेश्वरः ।
मुखा मुख्यस्य देहादेरध्यक्षत्वेन सोऽच्युतः ॥ ७० ॥
रूपादिबुद्धिद्वाराणि चक्षुरादीनि सर्वतः ।
यस्यासौ तादृशस्तिष्ठत्यधिष्ठानतयास्य च ॥ ७१ ॥

अस्य; जगत इत्यर्थः ।

ब्रह्माण्डदेहवत्त्वेन सर्वदेहात्मकत्वतः ।
तदक्ष्यादियुतत्वात्स विश्वतश्चक्षुरादिमान् ॥ ७२ ॥
धर्माधर्माख्यबाहुभ्यां सर्वं संनमतीश्वरः ।
वशी करोति सर्वं च जगदित्यर्थ ईरितः ॥ ७३ ॥
पतत्रैः पतयिष्णुत्वान्महाभूतैश्च पञ्चभिः ।
सर्वं संनमतीशानो जगदुत्पादयत्ययम् ॥ ७४ ॥
एवं देवः स्वप्रकाशो द्यावाभूम्यादिकं प्रभुः ।
उत्पादयञ्जगत्कृत्स्नमेक एवावतिष्ठते ॥ ७५ ॥

**वेनस्तत्पश्यन् विश्वा भुवनानि**
**विद्वान् यत्र विश्वं भवत्येकनीडम् ।**
**यस्मिन्निद९ं सं च वि चैक९ं स**
**ओतः प्रोतश्च विभुः प्रजासु ॥**
**प्र तद्वोचे अमृतं नु विद्वान्**
**गन्धर्वो नाम निहितं गुहासु ।**
**त्रीणि पदा निहिता गुहासु**
**यस्तद्वेद सवितुः पिता सत् ॥**

श्रद्धाप्रकर्षमुक्तेऽर्थे कर्तुं मन्त्रद्वयेन च ।
संदर्शयति वृत्तान्तं गन्धर्वस्य श्रुतिः स्वयम् ॥ ७६ ॥
जगत्समस्तं यत्रात्मन्येकनीडं भवत्यदः ।
एकत्वेन स्थितिं गच्छत्तादात्म्यं प्रतिपद्यते ॥ ७७ ॥
तद्वस्त्वनुभवन् साक्षात्सर्वाणि भुवनानि च ।
विद्वान्यो वर्तते जानन्नात्मत्वेनाखिलं जगत् ॥ ७८ ॥
आत्मसाक्षात्कृतौ सर्वं तद्रूपमिति भाति हि ।

स वेनसंज्ञो गन्धर्वः सर्वेषां बुद्धिषु स्थितम् ॥ ७९ ॥
अमृतं नाशरहितं तद्वस्तु स्वानुभूतितः ।
विद्वान् प्रवोचे शिष्येभ्यः प्रोवाच खलु सादरम् ॥ ८० ॥

स्वानुभवेन विद्वानित्यर्थः । नुशब्दार्थः खल्विति ।

वेनेन दृष्टे यस्मिंश्च परमात्मनि वस्तुनि ।
इदं सर्वं समुत्पन्नं विलीनं च भवेज्जगत् ॥ ८१ ॥
एकमद्वयतत्त्वात्मा स व्यापी सन्महेश्वरः ।
दीर्घतन्तुवदोतः स्यात्प्रजासु सकलास्वपि ॥ ८२ ॥
प्रोतस्तिर्यक्तन्तुवच्च सर्वत्रैवावतिष्ठते ।
जाग्रत्स्वप्नादिरूपाणि त्रीणि स्थानानि बुद्धिषु ॥ ८३ ॥
स्थितानि यस्तु गन्धर्वस्तदधिष्ठानमीश्वरम् ।
विजानाति स गन्धर्वो भवति स्वपितुः पिता ॥ ८४ ॥
ब्रह्मज्ञो ब्रह्मरूपेण जगदुत्पादकत्वतः ।
भवत्युत्पादकस्यापि स्वयमुत्पादकः पितुः ॥ ८५ ॥
यस्ता विजानात्सवितुः पिता सदिति हि श्रुतिः ।

तदिति; जागराद्यधिष्ठानमित्यर्थः ॥

**स नो बन्धुर्जनिता स विधाता**
**धामानि वेद भुवनानि विश्वा ।**
**यत्र देवा अमृतमानशाना-**
**स्तृतीये धामान्यभ्यैरयन्त ॥**
**परि द्यावापृथिवी यन्ति सद्यः**
**परि लोकान् परि दिशः परि सुवः ।**

**ऋतस्य तन्तुं विततं विचृत्य**
**तदपश्यत्तदभवत्प्रजासु ॥**

व्यवहारदशायां च सर्वप्राण्युपकारिता ॥ ८६ ॥
तद्दर्शिमुक्तिदत्वं च मन्त्राभ्यां तस्य कथ्यते ।
स नो बन्धुः स्वपुण्येन हितकृत्त्वान्महेश्वरः ॥ ८७ ॥
जनिता सर्वहेतुत्वात् स निर्माताखिलस्य सन् ।
सर्वानुच्चावचाल्ँलोकांस्तेषु स्थानानि यानि च ॥ ८८ ॥
योग्यानि देवतादीनां तानि जातानि सर्वदृक् ।
यत्र तृतीये स्वर्गाख्ये देवा इन्द्रादयोऽमृतम् ॥ ८९ ॥
पिबन्तः प्राप्तवन्तश्च स्वीयस्थानानि सर्वतः ।
तत्समस्तं विदित्वायं तत्तत्कर्मानुसारतः ॥ ९० ॥
फलं प्रयच्छतीत्यर्थो मन्त्रस्यास्य प्रकीर्तितः ।
ये स्युर्मुमुक्षवस्ते तु ब्रह्मतत्त्वार्थवेदिनः ॥ ९१ ॥
द्यावाभूमीद्वयं सद्यः परितो व्याप्नुवन्ति च ।
अन्तरिक्षादिकाल्ँलोकान्प्राच्याद्याः सकला दिशः ॥ ९२ ॥
स्वर्गलोकं च परितो यन्ति सर्वात्मकत्वतः ।
सत्यस्य ब्रह्मणस्तन्तुमविच्छेदेन संस्थितम् ॥ ९३ ॥
विस्तीर्णं स्याद्यथा शास्त्रान्निश्चित्य गुरुतश्च तत् ।
यः साक्षात्कृतवान् ब्रह्म स प्रजास्वभवच्च तत् ॥ ९४ ॥
श्रुत्यन्तरं ब्रह्म वेद ब्रह्मैव भवतीति हि ।

**परीत्य लोकान् परीत्य भूतानि**
**परीत्य सर्वाः प्रदिशो दिशश्च ।**

**प्रजापतिः प्रथमजा ऋतस्या-**
**त्मनात्मानमभिसंबभूव ॥**

अम्भस्येत्यादिना प्रोक्ता ब्रह्मविद्या निगम्यते ॥ ९५ ॥
सत्यस्य ब्रह्मणो ह्याद्यकार्यरूपः प्रजापतिः ।
हिरण्यगर्भो भूरादीन् लोकान्देवनरादिकान् ॥ ९६ ॥
देहान्परीत्य विदिशः प्राच्यादिकदिशोऽपि च ।
सर्वतो व्याप्य समये सृष्टेः सृष्ट्वाखिलं जगत् ॥ ९७ ॥
स्थितिकाले च रक्षित्वा सत्याद्यात्मानमाप्तवान् ।
आत्मना स्वस्वरूपेण तद्गोचरविबोधतः ॥ ९८ ॥

**सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।**
**सनिं मेधामयासिषम् ॥**

प्रार्थ्यते ब्रह्मलाभार्थमन्तर्यामी महेश्वरः ।
सीदत्यस्मिञ्जगत्सर्वमित्यव्याकृतमुच्यते ॥ ९९ ॥
सदःशब्देन तस्यायं पतिः पालयिता स्मृतः ।
अन्तर्यामी तमीशानं प्राप्तवानस्म्ययासिषम् ॥ १०० ॥
शीघ्रं संप्राप्नवानीति मत्वा भूतार्थकीर्तनम् ।

इति मत्वा; इति विवक्षयेत्यर्थः ।

अचिन्त्यचित्रजगतोऽनायासेन कृतत्वतः ॥ १०१ ॥
आश्चर्यरूपमिन्द्रस्य देवराजस्य च प्रियम् ।
कदा लप्स्येऽहमित्येवमिन्द्रोऽप्याशास्ति हीश्वरम् ॥ १०२ ॥
सर्वैरन्यैरपेक्ष्यं च सनिं कर्मफलात्मकम् ।
क्रियाफलप्रदातारं श्रुताधीतस्य धारणे ॥ १०३ ॥

शक्तिं मेधां प्रयच्छन्तमित्यध्याहृतिरिष्यते ।

**उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम ।**
**पशूꣳश्च मह्यमावह जीवनं च दिशो दिश ॥**

वह्न्युपाधिर्महेशानः प्रार्थ्यतेऽभीष्टलब्धये ॥ १०४ ॥
जाते प्राणिशरीरे यो जाठराग्निस्वरूपतः ।
विद्यते तिष्ठतीत्येवं जातवेदाः स उच्यते ॥ १०५ ॥
उत्पन्नान्यजमानान्वा फलदानाय चेतसि ।
विनिश्चिनोति वेत्तीति जातवेदाः प्रकीर्तितः ॥ १०६ ॥
जातवेदः प्रकर्षेण दीप्यस्वानुग्रहाय मे ।
ममानिष्टं प्रकुर्वाणां निर्ऋतिं पापदेवताम् ॥ १०७ ॥
विनाशयन्विनाश्यैतां पशून्मह्यं गवादिकान् ।
जीवनं च चकाराभ्यां भोग्यजातमशेषतः ॥ १०८ ॥
संपादय निवासार्थं दिशः प्राच्यादिदिग्गतान् ।
निवासान् दिश देहीति मन्त्रार्थः परिकीर्तितः ॥ १०९ ॥

**मा नो हिꣳसीज्जातवेदो गामश्वं पुरुषं जगत् ।**
**अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥**

संपादितगवादीनां प्रार्थ्यतेऽत्राविनाशनम् ।
हे जातवेदो गामश्वं त्वत्प्रसादाद्गवादिकम् ॥ ११० ॥
मामकीनं च मा हिंसीन्मा नाशयतु निर्ऋतिः ।
जगच्छब्दाद्गवाद्यन्यगृहक्षेत्रादिकीर्तनम् ॥ १११ ॥
अग्नेऽस्मदपराधं त्वं मनस्यस्थापयन्प्रभो ।
आगच्छानुग्रहार्थं मे श्रिया मा परिपातय ॥ ११२ ॥
धनधान्यसमृद्ध्या मां सर्वतः प्रापयेश्वर ।

**पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि ।**
**तन्नो रुद्रः प्रचोदयात् ॥**

इतः परं तेषु तेषु देशेष्वतिविलक्षणः ॥ ११३ ॥
श्रुतिपाठस्तत्र पूर्वैर्द्राविडः पाठ आदृतः ।
तस्मात्तदनुसारेण श्रुतिव्याख्याधुनोच्यते ॥ ११४ ॥
गायत्रीषट्कतो देवाः प्रार्थ्यन्ते ज्ञानहेतवः ।
विश्वरूपधरो रुद्रः प्रार्थ्यते तत्र चादितः ॥ ११५ ॥
विश्वतश्चक्षुरित्युक्तः सहस्राक्षो विराट् पुमान् ।
तस्य स्वरूपं देवस्य जानीमहि लभेमहि ॥ ११६ ॥
तदर्थं तस्य देवस्य रूपं ध्यायेम धीमहि ।
तस्मिन् ध्याने विराड् रुद्रो नोऽस्मान् प्रेरयतु प्रभुः ॥ ११७ ॥

"बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः" इत्याद्यागम-प्रसिद्धमूर्तिधरं महेशं प्रार्थयते—

**तत्पुरुषाय विद्महे महादेवाय धीमहि ।**
**तन्नो रुद्रः प्रचोदयात् ॥**

तमागमेषु प्रथितं पुरुषाकृतिमीश्वरम् ।
जानीमहि महादेवं ध्यायेम सततं वयम् ॥ ११८ ॥
प्रचोदयतु नो रुद्रस्तस्मिन् ध्याने निरन्तरम् ।

"बीजापूरगदेक्षुकार्मुक—" इत्याद्यागमप्रसिद्धमूर्तिधरं विनायकं प्रार्थयते—

**तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ।**
**तन्नो दन्तिः प्रचोदयात् ॥**

गजतुल्यमुखत्वेन दीर्घतुण्डस्य वक्रता ॥ ११९ ॥
यो रत्नकलशस्तस्य धारणायेति मन्यताम् ।
दन्तिर्महादन्तयुक्त इत्यर्थः परिकीर्तितः ॥ १२० ॥

पुराणादिप्रसिद्धं पक्षिराजमूर्तिधरं देवं प्रार्थयते—

**तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि ।**
**तन्नो गरुडः प्रचोदयात् ॥**

स्पष्टार्थत्वेन मन्त्रस्य न व्याख्या वार्त्तिकात्मिका ।

"हेमप्रख्यामिन्दुखण्डात्तमौलिम्" (प्रपञ्चसारः १४—२३) इत्याद्यागमप्रसिद्धमूर्तिधरां दुर्गां प्रार्थयते—

**कात्यायनाय विद्महे कन्यकुमारि धीमहि ।**
**तन्नो दुर्गिः प्रचोदयात् ॥**

कात्यः कृत्तिं वस्त इति श्रीरुद्रः परिकीर्तितः ॥ १२१ ॥
स एव यस्या अयनमधिष्ठानं तथोच्यते ।
कुमारी कुत्सितारिष्टमारिका परिकीर्तिता ॥ १२२ ॥
कन्या च कमनीयासौ कुमारी च तथोदिता ।
दुर्गिर्दुर्गैव लिङ्गादेर्व्यत्ययश्छान्दसो भवेत् ॥ १२३ ॥

"अर्कोद्दीप्यत्किरीटान्वितमकरलसत्कुण्डलम्" इत्याद्यागमप्रसिद्धमूर्तिधरं देवं प्रार्थयते—

**नारायणाय विद्महे वासुदेवाय धीमहि ।**
**तन्नो विष्णुः प्रचोदयात् ॥**

नारशब्दितमुख्यापो यस्य विष्णोः समाश्रयः ।
समुद्रजलसंवासी स नारायण उच्यते ॥ १२४ ॥

वसुदेवादभिव्यक्तः सोऽवतारविशेषतः ।
परमब्रह्मरूपेण व्यापित्वाद्विष्णुरुच्यते ॥ १२५ ॥
जप्या एताश्च गायत्र्यो देवताध्यानपूर्वकम् ।
अन्तःकरणशुद्ध्यर्थं सदा सूरिभिरादरात्[1] ॥ १२६ ॥

इति प्रथमोऽनुवाकः

**यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाᳪंस्याविवेश । सताᳪं शिक्यः पुरोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरोम् ॥**

सर्ववेदान्तलाभाय जप्यो मन्त्र उदीर्यते ।
वेदानां प्रणवः श्रेष्ठो यः सर्वजगदात्मकः ॥ १२७ ॥
प्रादुर्भूतः स वेदेभ्यः प्रतिभातः प्रजापतेः ।
वेदसारतयेत्यर्थः प्रविवेश पुनश्च सः १२८ ॥
गायत्र्यादीनि मन्त्रेषु प्रयोज्यस्तद्युतेषु हि ।

मन्त्रेष्विति; छन्दोभिरुपलक्षितेषु प्रयोक्तव्यः । तदुक्तं प्रपञ्चसारे— "अस्य तु वेदादित्वात् सर्वमनूनां प्रयुज्यते ह्यादौ" (१९–३५) इति ॥

सतां शिक्यः कर्मभिश्चोपासकैर्ज्ञानशालिभिः ॥ १२९ ॥
प्राप्तुं शक्यः कारणत्वाज्ज्येष्ठः प्रथम उच्यते ।
इन्द्रः प्रणववाच्यात्मा परमैश्वर्यसंयुतः ॥ १३० ॥
ऋषयोऽन्तर्मुखास्तेषां ज्ञानसामर्थ्यसिद्धये ।
ब्रह्मविद्यां जगौ तस्मात्प्रतिबन्धनिवृत्तये ॥ १३१ ॥
नमस्करोमि देवेभ्यः पितृभ्यश्चाहमादरात् ।

[1] इतः परं "सहस्रपरमा देवी" इत्यारभ्य पञ्चमानुवाकपर्यन्तं ग्रन्थकृता न विवृतम् ।

भूर्भुवः सुवरों वेदांस्त्रिलोकस्थानवाप्नुयाम् ॥ १३२ ॥
अत एव पठन्त्यन्ये छन्द ओमिति मानवाः ।

भूर्भुवः सुवश्छन्द ओमित्यर्थः ॥

इति षष्ठोऽनुवाकः

**नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओम् ॥**

अवाप्तवेदाविस्मृत्यै जप्यमन्त्र उदीर्यते ॥ १३३ ॥
नमोऽस्तु सर्वजगतां हेतवे परमात्मने ।
ग्रन्थस्य च तदर्थस्य धारणं मेऽस्तु चेतसि ॥ १३४ ॥
अनिराकरणं नामाविस्मृतिः सा यथा भवेत् ।
तथा धारयिताहं स्यां परमेष्ठिप्रसादतः ॥ १३५ ॥
एवं प्रार्थयमानस्य कर्णयोर्यच्छ्रुतं मम ।
अविनाशाय तत्सर्वं प्राप्नुयां स्थिरधारणम् ॥ १३६ ॥

इति सप्तमोऽनुवाकः

**ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दानं तपो यज्ञस्तपो भूर्भुवः सुवर्ब्रह्मैतदुपास्स्वैतत्तपः ॥**

ऐकाग्र्यलक्षणं यत्स्यात्तपो विज्ञानसाधनम् ।
तत्तपःप्राप्तये जप्यो मन्त्रोऽयमधुनोच्यते ॥ १३७ ॥
ऋतं वेदार्थबोधाय मीमांसाश्रवणं मतम् ।

मीमांसयोः श्रवणमित्यर्थः ।

इन्द्रियोपरतिः शान्तिः शान्तिशब्देन कीर्त्यते ॥ १३८ ॥

स्वत्वत्यागः परस्वत्वापत्त्यन्तो दानमुच्यते ।

आपत्तीति ; आपादनपर्यन्त इत्यर्थः ।

अग्निहोत्रादिको यज्ञस्तत्सर्वं तप उच्यते ॥ १३९ ॥
विराट्स्वरूपं यद्ब्रह्म भूरादित्रितयात्मकम् ।
मुमुक्षो त्वमुपास्स्वैतत्प्रत्ययावर्तनं कुरु ॥ १४० ॥
एतच्चोपासनं प्रोक्तमुत्तमं तप उच्यते ।

इत्यष्टमोऽनुवाकः

**यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्स्य कर्मणो दूराद्गन्धो वाति यथासिधारां कर्तेऽवहितामवक्रामेद्युवे युवे हुवे ह वा विह्वदिष्यामि कर्तं पतिष्यामीत्येवमनृतादात्मानं जुगुप्सेत् ।**

ज्ञानहेतुतया पुण्यं विहिताचरणात्मकम् ॥ १४१ ॥
प्रशस्यते निषिद्धस्याचरणं च विनिन्द्यते ।

ज्ञानप्रतिबन्धकत्वेनेति शेषः ।

यथैव सुरभिर्गन्धः सहागच्छति वायुना ॥ १४२ ॥
एवं पुण्यस्य यागादेः सुगन्धः कीर्तिलक्षणः ।
दूराद्वाति नृलोकाद्धि स्वर्गे गच्छत्यतो नृभिः ॥ १४३ ॥
पुण्यं कार्यमथाग्रे तु पापदृष्टान्त उच्यते ।
यथा प्रसारितां गर्ते कूपादौ कुत्रचिन्नरः ॥ १४४ ॥
खड्गधारामवक्रामेत्तदायं चिन्तयेन्नरः ।
युवे हुवे यौमि यौमि यद्यङ्घ्रिं मिश्रयाम्यहम् ॥ १४५ ॥
तद्धारायां तदाहं तु [1]विह्वलिष्याम्यसंशयम् ।

[1] मूले लस्य छान्दसो दकार इति सायणः ।

गर्ते वा संपतिष्यामि धारायां चरणस्य हि ॥ १४६ ॥
दृढस्पर्शेन विच्छेदाद्धविष्याम्येव विह्वलः ।
दृढस्पर्शो न चेद्गर्ते संपतिष्याम्यधस्त्विति ॥ १४७ ॥
एवं प्रवर्तमानोऽपि पापे मर्त्यो विचारयेत् ।
यदि तत्प्रकटं कुर्यां तदा स्यामिह निन्दितः ॥ १४८ ॥
यदि चाप्रकटं कुर्यां तदापि नरके खलु ।
पतिष्यामीति चात्मानं जुगुप्सेदनृतान्नरः ॥ १४९ ॥
धिङ् मां लोकद्वयभ्रष्टमित्यात्मानं विनिन्द्य च ।
पापान्निवारयेन्मर्त्य इति मन्त्रार्थ ईरितः ॥ १५० ॥

अवक्रामेत्; तदुपरि पादाभ्यां गन्तुं प्रवर्तत इत्यर्थः ।

यच्छब्दो यदिशब्दार्थे यस्थाने व्यत्ययेन हः ।
अत एव पठन्त्यन्ये युवे युव इति श्रुतौ ॥ १५१ ॥
अहमर्थे हशब्दः स्यात्लस्थाने व्यत्ययेन दः ।

यद्युव इत्यादावाह—यच्छब्द इत्यादिना । अध इति; अधोवर्तिनि गर्ते त्वित्यन्वयः । इतीति; 'इति चिन्तयेन्नरः' इति पूर्वेणान्वयः । इति चात्मानमिति; ईदृग्विचारयुक्त इत्यर्थः ।

इति नवमोऽनुवाकः

अणोरणीयान्महतो महीया-
नात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम् ॥

पुण्यानुष्ठानतश्चास्य निषिद्धाचारवर्जनात् ॥ १५२ ॥
शुद्धान्तःकरणस्यैवं ब्रह्मतत्त्वं समीरितुम् ।
अणोरणीयानित्यादिरनुवाकः प्रवर्तते ॥ १५३ ॥
आत्मशब्दः स्वरूपार्थः परमेश्वरवाचकः ।
अधिष्ठानतया तस्य जगद्रूपत्वकारणात् ॥ १५४ ॥
परमाण्वादयोऽस्माकमयोग्याः स्युस्तथापि च ।
योगिप्रत्यक्षगम्यत्वं तेषां तच्चात्मनो न हि ॥ १५५ ॥
इत्यभिप्रेत्य भगवानणीयान्परिकीर्तितः ।
एकब्रह्माण्डमध्यस्थं दिगाकाशादिकं महत् ॥ १५६ ॥
ईदृग्ब्रह्माण्डकोटीनामधिष्ठानत्वमात्मनः ।
अतो महीयान्महतोऽप्ययमात्मा प्रकीर्तितः ॥ १५७ ॥
हृदब्जसंवृता बुद्धिस्तन्मध्यस्था गुहोच्यते ।
स्याद्विद्ययोपलभ्यत्वं बुद्धौ निहितमात्मनः ॥ १५८ ॥
तमीशं निरुपाधित्वात्संकल्पेन विवर्जितम् ।
जीवस्यैव समीचीनमित्येतत्कल्पनं यतः ॥ १५९ ॥
अत एव महान्तं च शमादिगुणसंयुतः ।
धातुः प्रसादादीशस्यानुग्रहादधिकारवान् ॥ १६० ॥
साक्षात्करोति दृष्ट्वा तं वीतशोको भवेन्नरः ।

धातुरिति । तदुक्तम्—

“ ईश्वरानुग्रहादेषां पुंसामद्वैतवासना ।
महाभयपरित्राणा द्वित्राणामिह जायते ॥ ”

इति ।

**सप्त प्राणाः प्रभवन्ति तस्मात्**
**सप्तार्चिषः समिधः सप्त जिह्वाः ।**
**सप्त इमे लोका येषु चरन्ति**
**प्राणा गुहाशयान्निहिताः सप्त सप्त ॥**

विशुद्धचित्तैर्विज्ञेयः परमात्मा य ईरितः ॥ १६१ ॥
तस्योपलक्षणार्थं च जगत्कारणतोच्यते ।

तस्येति; शाखेन्दुन्यायेनेत्यर्थः ।

शिरःस्थसप्तच्छिद्रस्थाः सप्तसंख्यासमन्विताः ॥ १६२ ॥
प्राणा मायायुतादीशाज्जायन्ते चक्षुरादयः ।
चक्षुषी नासिके श्रोत्रे वाक् चेति प्राणसप्तकम् ॥ १६३ ॥
सप्तार्चिषः सप्तसंख्या वृत्तयः परिकीर्तिताः ।
तैर्गृह्यमाणविषयाः समिधः सप्त कीर्तिताः ॥ १६४ ॥
यथा गोलकभेदेन चक्षुरादि द्विधा भवेत् ।
तथा ग्राहकभेदेन रूपादिद्वित्वमुच्यते ॥ १६५ ॥

तैः; अर्चिर्भिरित्यर्थः ।

अथवा सप्तसंख्यायाः समिच्छब्देन नान्वयः ।
किंतु जिह्वापदेनैव वह्नेर्जिह्वास्त्विमाः श्रुताः ॥ १६६ ॥

"काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लोलायमाना इति सप्त जिह्वाः ॥"

(मु. १-४)

मुण्डकश्रुतिमेव पठति—कालीति ।

प्राणाश्चरन्ति देवादेर्देहस्था येषु सप्तसु ।
इमे भूरादयः सप्त लोकास्तस्मात्समुत्थिताः ॥ १६७ ॥
गुहाशयः स विज्ञेयो यो बुद्धावुपलभ्यते ।
तस्मादेव समुत्पन्नाः सप्तसंख्यासमन्विताः ॥ १६८ ॥
सप्तर्षयस्तथा सप्त समुद्रा एवमादिकाः ।
पदार्था निहितास्तत्र तत्र च स्थापिताः स्थले ॥ १६९ ॥

**अतः समुद्रा गिरयश्च सर्वे-**
**ऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।**
**अतश्च विश्वा ओषधयो रसाश्च**
**येनैष भूतस्तिष्ठत्यन्तरात्मा ॥**

समुद्रा गिरयश्चास्मात्प्रभवन्ति महेश्वरात् ।
अस्माद्गङ्गादयो नद्यः संजाताः प्रवहन्ति च ॥ १७० ॥
व्रीह्याद्योषधयोऽम्लाद्या रसाश्चेशात्समुत्थिताः ।
अन्तरात्मपदेनात्र लिङ्गदेहो विवक्षितः ॥ १७१ ॥
स्थूलदेहचिदात्मान्तर्मध्ये ह्येषोऽवतिष्ठते ।
येनौषधिरसेनायं बद्धे देहेऽत्र तिष्ठति ॥ १७२ ॥
तादृशो रस उत्पन्न इत्यर्थः परिकीर्तितः ।

**ब्रह्मा देवानां पदवीः कवीना-**
**मृषिर्विप्राणां महिषो मृगाणाम् ।**
**श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ**
**सोमः पवित्रमत्येति रेभन् ॥**

ईशस्योत्कृष्टरूपेणावस्थानमिह कथ्यते ॥ १७३ ॥

इन्द्रादिकानां देवानां मध्ये ब्रह्मा चतुर्मुखः ।
भूत्वा नियामकत्वेन परमेशोऽवतिष्ठते ॥ १७४ ॥
कवीनां काव्यशास्त्रादेः कर्तॄणां पदवीरयम् ।
पदं सुशब्दं वेतीति शब्दसामर्थ्यबोधवान् ॥ १७५ ॥
व्यासवाल्मीकिमुख्यो यस्तद्रुपश्चावतिष्ठते ।
ऋषिर्वसिष्ठप्रमुखस्तत्तद्गोत्रप्रवर्तकः ॥ १७६ ॥
चतुष्पदां तु महिषः शक्त्याधिक्येन संयुतः ।
बभूव प्रबलः श्येनः सर्वेषां पक्षिणामपि ॥ १७७ ॥
वृक्षौघानां छेदनार्थं परशुश्च बभूव सः ।
सोमवल्ल्यात्मको रेभन्पवित्रं शुद्धिकारणम् ॥ १७८ ॥
मन्त्रशब्देन युक्तः सन्नत्येत्यखिलमेव सः ।

**अजामेकां लोहितशुक्लकृष्णां**
**बह्वीं प्रजां जनयन्तीं सरूपाम् ।**
**अजो ह्येको जुषमाणोऽनुशेते**
**जहात्येनां भुक्तभोगामजोऽन्यः ॥**

चतुर्मुखादिदेहेषु विशेषेण स्थितिं विभोः ॥ १७९ ॥
व्यवहारस्य समये संकीर्त्याथ प्रदर्श्यते ।
अविद्यामुपजीव्यात्र बद्धमुक्तव्यवस्थितिः ॥ १८० ॥
तेजोऽबन्नानि संपाद्य तद्रूपाजा यदा तदा ।
लोहितादिकवर्णा स्याद्यदग्नेरिति हि श्रुतिः ॥ १८१ ॥

तेज इति; अजा तेजआदीनि संपाद्य तद्रूपा यदा स्यात्तदेत्यन्वयः । "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" (छान्दोग्ये ६-४-१.) इति श्रुतेरित्यर्थः ।

लोहितादिकशब्दैर्वा रजःसत्त्वतमोगुणाः ।
उपलक्ष्यास्तथाचेयं स्याद्गुणत्रितयात्मिका ॥ १८२ ॥
गुणत्रयात्मकत्वेन सरूपा या प्रजा भवेत् ।
तां समुत्पादयत्येका तामजो जनिवर्जितः ॥ १८३ ॥
जीवः सक्तो विरक्तश्च तत्रैकः सक्तिमानजः ।
प्रीत्या संसेवमानः सन्ननुशेते विमूढधीः ॥ १८४ ॥
यथोक्तामनुसृत्यैव वर्तते याति संसृतिम् ।
अन्यो विरक्तजीवस्तु भुक्तभोगां जहाति ताम् ॥ १८५ ॥
प्रागेव भुक्ता भोगा ये नोपरिष्टात्तथाविधैः ।
भोगैर्युक्तां भुक्तभोगां तत्त्वज्ञानेन बाधते ॥ १८६ ॥
संघातमानी बद्धः स्यात्तद्विहीनो विमुच्यते ।

व्यवस्थां व्यक्तीकरोति—संघातेति ।

**हꣳसः शुचिषद्वसुरन्तरिक्षस-**
**द्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा**
**गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥**

ज्ञानबाधितमायस्य भाति ब्रह्मात्मना जगत् ॥ १८७ ॥
इति प्रदर्श्यतेऽर्थोऽयमतो जगदनूद्यते ।
सर्वदा गच्छतीत्यर्को हंसोऽयं शुद्धमण्डले ॥ १८८ ॥
ज्योतिर्मये सीदतीति शुचिषत्परिकीर्तितः ।
जगन्निवासहेतुत्वाद्वसुः सूत्रात्मरूपतः ॥ १८९ ॥
वायुः सन्नन्तरिक्षेऽयं सीदतीत्यन्तरिक्षसत् ।
होताग्निर्होमजनकस्तद्रूपो वेदिसंस्थितः ॥ १९० ॥

सीदत्यतिथिरूपेण दुरोणेषु गृहेष्वयम् ।
कर्माधिकारिजीवः सन् नृषु मर्त्येषु संस्थितः ॥ १९१ ॥
वरसच्छ्रेष्ठकाश्यादौ पूज्यदेवात्मना स्थितः ।
ऋतसत्फलरूपेण वैदिके कर्मणि स्थितः ॥ १९२ ॥
नक्षत्रादिकरूपेण व्योमस्थो व्योमसद्भवेत् ।
अब्द्यो जलेभ्यः संजातः शङ्खनक्रादिरूपतः ॥ १९३ ॥
गोजाः क्षीरादिरूपेण गोभ्यः संजात उच्यते ।
ऋतजाः सत्यवचनाज्जातः कीर्तिस्वरूपतः ॥ १९४ ॥
वृक्षादिरूपतोऽद्रिभ्यो जात इत्यद्रिजाः स्मृतः ।
ऋतं सत्यं परं ब्रह्म हंस इत्यादिनोदितम् ॥ १९५ ॥
यज्जगत्तत्समस्तं च ब्रह्मैव ज्ञानिदृष्टितः ।

**यमाज्जाता न परा नैव किंच-**
**नास य आविवेश भुवनानि विश्वा ।**
**प्रजापतिः प्रजया संविदान-**
**स्त्रीणि ज्योतींᳪषि सचते स षोडशी ॥**

जगदात्मत्वमुक्तं यत्तदत्र प्रतिपाद्यते ॥ १९६ ॥
सृष्टेरूर्ध्वं समुत्पन्नाः प्रजा यस्मान्महेश्वरात् ।
परा न व्यतिरिक्ताः स्युर्नापि तत्पूर्वभाविनः ॥ १९७ ॥

सृष्टेः पूर्ववर्तिप्रजा नेश्वरादन्या इत्यर्थः ।

सृष्टेः पूर्वं ब्रह्मभिन्नं वस्तु नैवास किंचन ।
श्रुत्यन्तरे ह्येकमेवाद्वितीयं ब्रह्म संश्रुतम् ॥ १९८ ॥
नापि चेतनजीवस्य ब्रह्मान्यत्वमुपेयते ।

य ईशः सर्वलोकस्थान् देहाञ्जीवात्मनाविशत् ॥ १९९ ॥
अनेन जीवेनेत्यादिश्रुतिसंकीर्तितत्ववतः ।
प्रजापालक ईशोऽयं प्रजयोत्पन्नयात्मनः ॥ २०० ॥
तादात्म्यं लभमानः सन् वर्तते किंच सोऽच्युतः ।
त्रीणि ज्योतींषि सचते समवैति तदात्मकः ॥ २०१ ॥
अग्न्यर्कचन्द्ररूपाणि ज्योतींषीत्यर्थ ईरितः ।
प्रश्नोपनिषदुक्ता याः कलाः षोडश तद्युतः ॥ २०२ ॥
तत्कलारूपजगता तादात्म्यात्षोडशी शिवः ।

**विधर्तार॑ हवामहे वसोः कुविद्वनाति नः ।**
**सवितारं नृचक्षसम् ॥**

मन्त्राः केचिदिहोच्यन्ते सर्वेशप्रार्थनात्मकाः ॥ २०३ ॥
ब्रह्मविज्ञानलाभाय वेदेन हितकारिणा ।
वसोर्ज्ञानस्य दातारं विधर्तारं विशेषतः ॥ २०४ ॥

विशेषतो दातारमित्यन्वयः ।

अस्मद्बुद्धेः प्रेरकत्वात्सवितारं नृचक्षसम् ।
तत्त्वविद्याप्रवक्तारं नृणामाचार्यरूपतः ॥ २०५ ॥
अस्मत्प्रसादसिद्ध्यर्थमाह्वयामो महेश्वरम् ।
कुवित्प्रभूतं ज्ञानाख्यं धनमीशो ददाति नः ॥ २०६ ॥

**अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।**
**परा दुष्वप्निय॑ सुव ॥**

हे देव प्रेरकाद्यास्मिन् दिने विद्याभिलाषिणाम् ।
नः शिष्यादिप्रजोपेतं भाग्यमाचार्यतात्मकम् ॥ २०७ ॥

सावीः प्रयच्छ द्वैतं च स्वप्नतुल्यं पराकुरु ।

**विश्वानि देव सवितर्दुरितानि परासुव ।**
**यद्भद्रं तन्म आसुव ॥**

सर्वाण्यघानि ज्ञानस्य प्रतिबन्धान् विनाशय ॥ २०८ ॥
असंभावनया हीनं विपर्ययविवर्जितम् ।
यदस्ति तत्त्वविज्ञानं तत्साकल्येन देहि मे ॥ २०९ ॥

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।**
**माध्वीर्नः सन्त्वोषधीः ॥**

ऋतं ब्रह्मेच्छते मह्यं वाता वान्तु सुखावहाः ।
स्याद्वायौ प्रबले रोगो विघ्नस्तत्त्वधियो यतः ॥ २१० ॥
अतो वायोरानुकूल्यं प्रार्थ्यते ज्ञानकामिना ।
नद्यः संपादयन्त्वम्बु मधुरं रोगनाशकम् ॥ २११ ॥
व्रीह्याद्या मधुराः सन्तु पथ्यरूपा भवन्तु नः ।

**मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः ।**
**मधु द्यौरस्तु नः पिता ॥**

रात्रौ दिवा च नोऽस्माकं सुखमस्त्वनुकूलतः ॥ २१२ ॥
मा भूत्कालकृतो विघ्नो ज्ञानस्येत्यर्थ ईरितः ।

अनुकूलत इति ; सार्वविभक्तिकस्तसिः । अनुकूलमित्यर्थः ।

पार्थिवं शयनादिस्थं रजो मधुमदस्तु नः ॥ २१३ ॥
अनुकूलं तदप्यस्तु कण्टकादिविवर्जितम् ।
द्यौः पिता पृथिवी मातेत्येवं श्रुत्या पिता हि सा ॥ ११४ ॥

**मधुमान्नो वनस्पतिर्मधुमाँ२ अस्तु सूर्यः ।**
**माध्वीर्गावो भवन्तु नः ॥**

चूतादिर्मधुमानस्तु मधुरैरन्वितः फलैः ।
अस्त्वेष जीवनोपायो नोऽस्मान् प्रति महीरुहः ॥ २१५ ॥
अकृत्वाधिकसंतापमनुकूलप्रकाशयुक् ।
सूर्योऽस्तु गावो माध्वीर्नो मधुरक्षीरसंयुताः ॥ २१६ ॥

**घृतं मिमिक्षे घृतमस्य योनि-**
**र्घृते श्रितो घृतम्वस्य धाम ।**
**अनुष्वधमावह मादयस्व**
**स्वाहाकृतं वृषभ वक्षि हव्यम् ॥**

देहानुकूल्यं संप्रार्थ्य भोगस्य सकलस्य च ।
ज्ञानहेतुक्रियाहेतोरग्नेस्तत्प्रार्थ्यतेऽत्र तु ॥ २१७ ॥

तत्; आनुकूल्यम् ।

घृतमग्नौ सिक्तवन्तो यजमानाः पुरातनाः ।
हेतुर्वह्नेर्घृतं तेन ज्वालानामभिवृद्धितः ॥ २१८ ॥
अतो घृते श्रितो वह्निर्घृतमेवास्य धाम च ।
अनुसृत्य स्वधामन्नमस्मदीयं हविर्वह ॥ २१९ ॥
देवानत्रानयानीय मादयस्व मुदान्वितान् ।
कुरु हे वृषभश्रेष्ठ हव्यं स्वाहाकृतं वह ॥ २२० ॥
स्वाहाकारेण चास्माभिर्दत्तं प्रापय देवताः ।

हविर्वहेति; आवहेति यावत् । तस्यैवार्थो देवानत्रानयेति ।

**समुद्रादूर्मिर्मधुमाँ उदार-**
**दुपांशुना सममृतत्वमानट् ।**
**घृतस्य नाम गुह्यं यदस्ति**
**जिह्वा देवानाममृतस्य नाभिः ॥**

समुद्रवत्समधिकात्परिपूर्णपरात्मनः ॥ २२१ ॥
ऊर्मितुल्यप्रपञ्चोऽयं मधुमान् भोग्य उत्थितः ।
अब्धेस्तरङ्गवत्सर्वं भोग्यमीशादजायत ॥ २२२ ॥
घृतं दीप्तं स्वप्रकाशं तस्य प्रणवलक्षणम् ।
नाम सर्वेषु वेदेषु यद्गोप्यं विद्यते महत् ॥ २२३ ॥

घृतमिति ; " घृ क्षरणदीप्त्योः " इति धातुः ।

तेन प्रणवरूपेणोपांशुना ध्यानकालतः ।
शनैरुच्चार्यमाणेनामृतत्वं नाशवर्जितम् ॥ २२४ ॥
ब्रह्मानट् सम्यगाप्नोति तच्च जिह्वा दिवौकसाम् ।
तैर्ध्यानतत्परैर्नित्यं कीर्त्यत्वादास्यमध्यतः ॥ २२५ ॥
वर्तते किंच मोक्षस्य नाभिराश्रय उच्यते ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ २२६ ॥
इति श्रुत्यन्तरोक्तत्वादनेनाप्यं हि तत्फलम् ।
एतस्यामृचि तारस्य मोक्षसाधनतोदिता ॥ २२७ ॥

**वयं नाम प्रब्रवामा घृतेना-**
**स्मिन्यज्ञे धारयामा नमोभिः ।**
**उप ब्रह्मा शृणवच्छस्यमानं**
**चतुःशृङ्गोऽवमीद्गौर एतत् ॥**

अस्मिन् यज्ञे ज्ञानयज्ञे वयं ज्ञानाभिलाषिणः ।
ब्रह्मात्मना निमित्तेन नाम प्रणवसंज्ञकम् ॥ २२८ ॥
प्रब्रवामोच्चारयामो ध्यायन्तः सर्वदा ततः ।
नमस्कारैर्युताश्चित्ते धारयामो महेश्वरम् ॥ २२९ ॥
शस्यमानं स्तूयमानमस्माभिः प्रणवेन च ।
ब्रह्मैतच्छ्रूयमाणं च पार्श्वस्थैर्ब्रह्मवेदिभिः ॥ २३० ॥
अकारादिकनादान्तचतुःशृङ्गसमन्वितः ।
प्रणवाख्यो वृषः श्रोतो वान्तवान्प्रत्यपादयत् ॥ २३१ ॥

**चत्वारि शृङ्गा त्रयो अस्य पादा**
**द्वे शीर्षे सप्त हस्तासो अस्य ।**
**त्रिधा बद्धो वृषभो रोरवीति**
**महो देवो मर्त्याँ॒ आविवेश ॥**

प्रणवप्रतिपाद्यत्वादस्य प्रणवरूपिणः ।
अकारादीनि चत्वारि शृङ्गाणि परमात्मनः ॥ २३२ ॥
ब्रह्मैभिर्गम्यते तत्त्वमिति पादाः समीरिताः ।
विश्वश्च तैजसः प्राज्ञ इत्यध्यात्मं त्रयोऽङ्घ्रयः ॥ २३३ ॥
विराड्ढिरण्यगर्भश्चाव्याकृतश्चाधिदैवतम् ।
द्वे शक्ती चिदचिद्रूपे शिरःस्थाने समीरिते ॥ २३४ ॥
भूरादयः सप्त लोकाः हस्ताः स्युः परमात्मनः ।
विश्वादिभिर्विराडाद्यैस्त्रिधाकारादिषु त्रिषु ॥ २३५ ॥
संबद्धः प्रणवो ब्रह्म प्रतिपादयति स्फुटम् ।
स्पष्टं प्रणववेद्यं तद्देव इत्यादिनोच्यते ॥ २३६ ॥
प्रविष्टः सर्वतो मर्त्यान्नरदेहान्महेश्वरः ।

नखाग्रावधिदेहेऽयं संप्रविष्ट इति श्रुतिः ॥ २३७ ॥

**त्रिधा हितं पणिभिर्गुह्यमानं**
**गवि देवासो घृतमन्वविन्दन् ।**
**इन्द्र एकꣳ सूर्य एकं जजान**
**वेनादेकꣳ स्वधया निष्टतक्षुः ॥**

देहे विश्वादिसंज्ञेन त्रिप्रकारेण संस्थितम् ।
विराडादिकसंज्ञेन ब्रह्माण्डे च त्रिधा स्थितम् ॥ २३८ ॥
गोप्यमानं रहस्यत्वादाचार्यैर्ब्रह्म भास्वरम् ।
लब्धवन्तो महावाक्ये देववत्सात्त्विका नराः ॥ २३९ ॥
यत् त्रिधा हितमित्युक्तमेतदेव विविच्यते ।
समुत्पादितवानेकं विराड् जागरणात्मकम् ॥ २४० ॥
हिरण्यगर्भोऽजनयत्स्वप्नरूपं प्रभाववान् ।
सुषुप्तरूपं संजातं वेनादव्याकृतात्मनः ॥ २४१ ॥
वेनेति कान्तिकर्मा स्यात्सर्वदुःखविवर्जनात् ।
कमनीयोऽव्याकृतः स्यादित्येवमवगम्यताम् ॥ २४२ ॥

वेनेति ; धातुरिति शेषः ।

धीयते स्थाप्यते स्वस्मिन्निति ब्रह्मात्मिका चितिः ।
आश्रयान्तरहीनेयं स्वधाशब्देन कीर्त्यते ॥ २४३ ॥
तयोत्पादितवन्तस्ते त्रयो जागरणादिकम् ।

**यो देवानां प्रथमं पुरस्ता-**
**द्विश्वाधिको रुद्रो महर्षिः ।**
**हिरण्यगर्भं पश्यत जायमानꣳ**
**स नो देवः शुभया स्मृत्या संयुनक्तु ॥**

द्रवत्येति रुदं शब्दं वैदिकं रुद्र उच्यते ॥ २४४ ॥
वेदगम्यो महाञ्श्रेष्ठोऽतीन्द्रियो द्रष्टुमध्यतः ।
हिरण्यगर्भं यो देवः पश्यति स्वप्रकाशचित् ॥ २४५ ॥
आदिभूतं समस्तानामिन्द्रादीनां दिवौकसाम् ।
पुरस्ताज्जन्मनां कीर्त्या देवानां जन्मतः पुरा ॥ २४६ ॥
पुरस्ताज्जन्मसंकीर्त्या तत्प्राथम्यं स्फुटीकृतम् ।
स देवः शुभया स्मृत्या सर्वसंसारघातिना ॥ २४७ ॥
ब्रह्मस्मृत्या संयुनक्तु संयुक्तान् प्रकरोतु नः ।
मन्त्रोऽयं ब्रह्मविद्यायाः प्राप्तये जप्यतां बुधैः ॥ २४८ ॥
इति प्रतीयतेऽस्माकं मन्त्रलिङ्गस्य तत्त्वतः ।

**यस्मात्परं नापरमस्ति किंचि-**
**द्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।**
**वृक्ष इव स्तब्धो दिवि तिष्ठ-**
**त्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥**

यदुक्तं शुभयेत्यादि स्मर्तव्यं तदिहोच्यते ॥ २४९ ॥
उत्कृष्टमपकृष्टं वा वस्तु यस्मान्न विद्यते ।
नाल्पं यस्माद्ब्रह्मणोऽस्ति नाधिकं वस्तु किंचन ॥ २५० ॥
गुणोत्कर्षापकर्षौ तु परापरपरोदितौ ।
मानोत्कर्षादिकं प्रोक्तं ज्यायइत्यादिशब्दतः ॥ २५१ ॥
सर्वथा तन्निषेधेनाद्वितीयत्वं हि सिध्यति ।

उत्कर्षापकर्षनिषेधेनेत्यर्थः ।

वृक्षः स्तब्धो यथैकत्र गत्यादिरहितस्तथा ॥ २५२ ॥

स्वप्रकाशस्वरूपोऽसौ निर्विकारोऽवतिष्ठते ।
तेनेदं पूर्णमखिलं पुरुषेण परात्मना ॥ २५३ ॥
नास्त्येव जगदाकारो परमात्मैव संस्थितः ।

**न कर्मणा न प्रजया धनेन**
**त्यागेनैके अमृतत्वमानशुः ।**
**परेण नाकं निहितं गुहायां**
**विभ्राजते यद्यतयो विशन्ति ॥**

ब्रह्मस्मृतावन्तरङ्गं त्यागो हेतुरिहोच्यते ॥ २५४ ॥
तच्चामृतत्त्वं न प्राप्यमग्निहोत्रादिकर्मणा ।
पुत्रादिना धनेनापि किंतु कर्मादिहानतः ॥ २५५ ॥
व्यापाराणां लौकिकानां वैदिकानां च वर्जनात् ।
केचिदन्तर्मुखा एवामृतत्वं प्राप्नुवन्ति तत् ॥ २५६ ॥
जितेन्द्रिया यद्विशन्ति तत्स्वर्गादुत्तमं च सत् ।
एकाग्रबुद्धिनिष्ठं सद्विशेषेण प्रकाशते ॥ २५७ ॥
अन्तर्मुखैः सद्भिरेव ब्रह्म तच्चानुभूयते ।

**वेदान्तविज्ञानसुनिश्चितार्थाः**
**संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।**
**ते ब्रह्मलोके तु परान्तकाले**
**परामृताः परिमुच्यन्ति सर्वे ॥**

**दह्रं विपाप्मं परमेश्मभूतं**
**यत्पुण्डरीकं पुरमध्यसꣳस्थम् ।**
**तत्रापि दह्रं गगनं विशोक-**
**स्तस्मिन्यदन्तस्तदुपासितव्यम् ॥**

**यो वेदादौ स्वरः प्रोक्तो**
**वेदान्ते च प्रकृतिष्ठितः ।**
**तस्य प्रकृतिलीनस्य**
**यः परः स महेश्वरः ॥**

त्यागस्य मोक्षहेतुत्वं पूर्वस्यामृचि कीर्तितम् ॥ २५८ ॥
ज्ञानस्य तरतीत्यादौ श्रुतौ तद्बहुशः श्रुतम् ।
अतस्तयोः पृथङ् मुक्तावुपयोगोऽत्र वर्ण्यते ॥ २५९ ॥
विरोधपरिहाराय तयोः श्रुत्योर्यथोक्तयोः ।
वेदान्तवाक्यजज्ञाननिश्चितात्मैक्यशालिनः ॥ २६० ॥
संन्यासपूर्वको योगः सर्ववृत्तिविनिग्रहः ।
तस्माद्विशुद्धसत्त्वाश्च भोगव्यावृत्तचेतसः ॥ २६१ ॥
अतो नियमनासक्ता यतयः परिकीर्तिताः ।
ज्ञानं तत्त्वस्य संस्फूर्त्याविद्याया विनिवर्तकम् ॥ २६२ ॥
त्यागो निवर्तयेद्भोगं चित्तशुद्धेस्तु कारणम् ।
इति मुक्तौ तयोरुक्ता पृथगेवोपयोगिता ॥ २६३ ॥
ब्रह्मसंदर्शने जाते ते संसारविलक्षणाः ।
वैलक्षण्यद्योतनार्थस्तुशब्दः परिकीर्तितः ॥ २६४ ॥
अज्ञाननाशे देहस्य पतनावसरः स्मृतः ।
परान्तकालो भूयश्च देहग्रहणवर्तनात् ॥ २६५ ॥
तस्मिन् सर्वे विमुच्यन्ते देवा वा मानुषास्तथा ।
उत्तमाधमभावस्तु भवेदत्राप्रयोजकः ॥ २६६ ॥
जगद्धेतुतयोत्कृष्टममृतं नाशवर्जितम् ।
तत्त्वज्ञानं विना लब्ध्वाव्याकृतं परिकीर्तिम् ॥ २६७ ॥

अव्याकृताद्विमुच्यन्ते ज्ञानिनो देहपाततः ।

तत्काल एवेत्यर्थः ।

अज्ञानिनस्तु प्रलये देहबन्धे गतेऽपि च ॥ २६८ ॥
अज्ञानान्न हि मुच्यन्ते मुच्यन्ते ज्ञानिनस्तदा ।
दहं विपाप्ममित्याद्या व्याख्याताः पद्यरूपतः ॥ २६९ ॥
न्यायरत्नावलीग्रन्थ इति चात्रोपरम्यते ।

इति दशमोऽनुवाकः[1]

**आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलꣳ स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन् मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषा मण्डलꣳ स यजुषां लोकः सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः ।**

रविबिम्बे परेशस्योपासनं कथ्यतेऽधुना ॥ २७० ॥
पूर्वानुवाकाभिहितो यो नारायणशब्दितः ।
स एष रविरूपेण वर्तते परमेश्वरः ॥ २७१ ॥
दृश्यमानं रवेरेतद्वर्तुलाकारमण्डलम् ।
तेजःपुञ्जं तपत्युष्णं तत्र तस्मिंश्च मण्डले ॥ २७२ ॥
ताः प्रसिद्धा ऋचः सन्ति तत्तस्मात्कारणादृचः ।
निष्पादितं मण्डलं स्यादृचस्तन्मानिदेवताः ॥ २७३ ॥
तासां स बिम्बभागोऽयं निवासः परिकीर्तितः ।
ऋगात्मकत्वं बिम्बस्य ध्यात्वाथ तदनन्तरम् ॥ २७४ ॥
यदेतन्मण्डले तेजो भास्वरं संप्रकाशते ।

[1] इतः परमेकादशद्वादशानुवाकौ न विवृतौ ।

तानि तेजःस्वरूपाणि सामानीति विचिन्तयेत् ॥ २७५ ॥
सोऽर्चिर्भागो निवासः स्यात्साम्नां तदभिमानिनाम् ।
सामध्यानानन्तरं च चिन्तयेद्यजुरात्मकम् ॥ २७६ ॥
शास्त्रप्रसिद्धो देवात्मा मण्डलेऽर्चिषि वर्तते ।
तानि देवस्वरूपाणि यजूंषीति विचिन्तयेत् ॥ २७७ ॥
यजुरात्मा स च पुमान्यजुषा कृतमण्डलम् ।
इति ध्यायेद्यजुर्भागः स यजुर्देवतालयः ॥ २७८ ॥
यन्मण्डलं यदर्चिश्च तत्रत्यपुरुषश्च यः ।
एतत्त्रितयरूपैषा विद्या त्रय्येव भासते ॥ २७९ ॥

ऋग्यजुःसामात्मिकैवेत्यर्थः ।

अत्रोक्तो यः पुमानेष रविमण्डलमध्यगः ।
हिरण्मयोऽस्ति तत्त्वं च प्रसिद्धमितरत्र हि ॥ २८० ॥

हिरण्मयत्वं च शाखान्तरे प्रसिद्धमित्यर्थः । "अथ य एषोऽन्तरादित्यो हिरण्मयः पुरुषो दृश्यते" इति श्रुतेः (छन्दोग्ये १-६-६) ।

इति त्रयोदशोऽनुवाकः

**आदित्यो वै तेज ओजो बलं यशश्चक्षुः श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तथ्सत्यमन्नमायुरमृतो जीवो विश्वः कतमः स्वयंभुः प्रजापतिः संवथ्सर इति संवथ्सरोऽसावादित्यो य एष पुरुष एष भूतानामधिपतिर्ब्रह्मणः सायुज्य॰ सलोकतामाप्नोत्येतासामेव देवताना॰ सायुज्य॰ सार्ष्टिता॰ समानलोकतामाप्नोति य एवं वेदेत्युपनिषत् ।**

सर्वात्मकत्वरूपं च प्राहोपास्यगुणं रवेः ।

उपास्यत्वेन यः प्रोक्तः पूर्वमर्कः स एव च ॥ २८१ ॥
तेजआद्यधिपत्यन्तसमस्तजगदात्मकः ।
बलहेतुर्भवेदोजो देहशक्तिर्बलं स्मृतम् ॥ २८२ ॥
आत्मा देहो मनश्चित्तं मन्युः क्रोधः समीरितः ।
मनुः स्वायंभुवादिः स्यान्मृत्युर्यम उदीरितः ॥ २८३ ॥
स्युर्देवताविशेषास्तु सत्याद्यास्ते च संस्फुटाः ।
कः प्रजापतिरित्युक्तः किंशब्देन तदुच्यते ॥ २८४ ॥
वाचा विशेषतो वक्तुमयोग्यं वस्तु यद्भवेत् ।
कं सुखं तत्परोक्षं स्यात्सत्यं त्वनृतवर्जनम् ॥ २८५ ॥
अन्नं व्रीह्यादिरायुस्तु शतसंवत्सरादिकम् ।
अमृतो मृतिहीनः स्याच्चिदात्मा जीव उच्यते ॥ २८६ ॥
स च देहविभेदेन विश्वो नानाविधः स्मृतः ।
अतीव सुखरूपोऽयं कतमः परिकीर्तितः ॥ २८७ ॥
अनुत्पन्नः स्वयंभुः स्याच्छान्दसं तु स्वयं त्विति ।
प्रजापालकराजादिः प्रजापतिरितीरितः ॥ २८८ ॥
इतिः प्रदर्शनार्थः स्यादित्यादिसकलस्य च ।
आदित्यजत्वादादित्यः संवत्सर उदीरितः ॥ २८९ ॥
य एष पुरुषः सर्वः स एव प्राणिनामपि ।
भवत्यधिपतिः स्वामीत्येवं मन्त्रार्थ ईरितः ॥ २९० ॥

सर्वः सर्वात्मक इत्यर्थः ।

उक्त्वोपास्यगुणानेवं फलमत्र प्रदर्श्यते ।
उपास्ते यः पुमानेवं स सायुज्याद्यवाप्नुयात् ॥ २९१ ॥

हिरण्यगर्भोपास्तिश्च तदङ्गानामुपासनम् ।
इत्युपास्तिर्द्विधाद्ये च भावनातिशये सति ॥ २९२ ॥
हिरण्यगर्भसायुज्यं ताद्रूप्यं प्रतिपद्यते ।
भावनामन्दतायां च तत्सालोक्यं समश्नुते ॥ २९३ ॥
द्वितीये भावनाधिक्ये देवसायुज्यमश्नुते ।
भावनामध्यतायां च समानैश्वर्यमश्नुते ॥ २९४ ॥
तन्मान्द्ये च सलोकत्वमिन्द्रादीनां प्रपद्यते ।
एवं रहस्यविद्योक्ता समाप्तिमगमच्छुभा ॥ २९५ ॥

इति चतुर्दशोऽनुवाकः

**घृणिः सूर्य आदित्योमर्चयन्ति तपः सत्यं मधु क्षरन्ति तद्ब्रह्म तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् ।**

घृणिर्दीप्तियुतः सूर्यः सूर्य इत्यभिधानवान् ।
आदित्य अदितेः पुत्रः सोऽहमस्मि तथाविधम् ॥ २९६ ॥

ओमित्यस्यार्थमाह—सोऽहमिति । तथाविधमादित्यमित्यन्वयः ।

आदित्यं पुरुषाः सर्वेऽप्यर्चयन्ति फलार्थिनः ।
तमादित्यं समुद्दिश्य तपः कुर्वन्ति साधवः ॥ २९७ ॥
समर्पयन्ति नैवेद्यं मधुक्षीरादिकं बुधाः ।
तदादित्यात्मकं वस्तु वेदो वा ब्रह्म वा परम् ॥ २९८ ॥

परं ब्रह्मेत्यन्वयः ।

आदित्यरूपं तच्चापो वृष्टिनिष्पादकत्वतः ।
याः समुद्रादिगा आपो यज्ज्योतिर्दहनादिकम् ॥ २९९ ॥
मधुरादिरसो यश्च यत्सुधासंज्ञकामृतम् ।

यद्ब्रह्ममन्त्रजातं च ये च भूरादयस्त्रयः ॥ ३०० ॥

लोका इति शेषः ।

आदित्यरूपं तत्सर्वमोमित्यर्थः प्रकीर्तितः ।

इति पञ्चदशोऽनुवाकः

**सर्वो वै रुद्रस्तस्मै रुद्राय नमोऽस्तु ।**
**पुरुषो वै रुद्रस्तन्महो नमो नमः ॥**
**विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।**
**सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥**

रुद्रः प्रसिद्धो गौरीशः सर्वः सर्वात्मकः स्मृतः ॥ ३०१ ॥
जीवरूपेण देहेषु समस्तेषु प्रवेशतः ।

सर्वात्मकत्वे हेतुमाह—जीवेति ।

नमोऽस्तु तस्मै रुद्राय सर्वरूपाय शंभवे ॥ ३०२ ॥
यश्चिदात्मास्ति पुरुषो विनाश्य प्रकृतिं जडाम् ।
स भक्तानुग्रहायैव रुद्रमूर्त्याविभासते ॥ ३०३ ॥
सन्महोऽबाधितं तेजः सदेवेत्यादिकश्रुतेः ।
अबाध्यस्वप्रकाशाय नतिरस्तु पुनः पुनः ॥ ३०४ ॥
यज्जडं विश्वमस्तीदं यद्भूतं चेतनात्मकम् ।
इत्थं चिदचिदात्मत्वाच्चित्रं यद्भुवनं जगत् ॥ ३०५ ॥
तत्रापि यज्जगज्जातं जायमानं च यज्जगत् ।
स सर्वोऽपि प्रपञ्चोऽयमेष रुद्रो हि वस्तुतः ॥ ३०६ ॥
न निरूपयितुं शक्यं तद्धि तद्व्यतिरेकतः ।
तस्मै रुद्राय महते नमोऽस्तु सकलात्मने ॥ ३०७ ॥

इति षोडशोऽनुवाकः

**कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शंतमꣳ हृदे । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥**

श्लाघार्थकत्थधातूत्थं प्रशंसामाह कत्पदम् ।
ततः प्रशस्तरुद्राय कद्रुद्राय प्रचेतसे ॥ ३०८ ॥
प्रकटज्ञानयुक्ताय कामसेक्तृतमाय च ।
कामप्रदाय स्तव्याय स्तोतुं योग्याय तव्यसे ॥ ३०९ ॥
हृदे हृदयवर्तित्वात्तद्रूपाय च शंतमम् ।
वचः सुखतमं स्तोत्रं कथयाम महेश्वर ॥ ३१० ॥
सर्वो हीत्यादिकं वाक्यं व्याख्यातं पूर्वमेव हि ।

इति सप्तदशोऽनुवाकः

**नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः ॥**

अत्र बाहुपदं ज्ञेयं समस्ताङ्गोपलक्षणम् ॥ ३११ ॥
सुवर्णमयदेहाय स्वभक्तानुजिघृक्षया ।
जगन्माताम्बिका तस्याः पतिर्भर्ता समीरितः ॥ ३१२ ॥
ब्रह्मविद्यात्मको देहस्तस्याश्चोमापदोदितः ।
तादृश्याः स्वामिने तस्मै नतिरस्तु पुनः पुनः ॥ ३१३ ॥
अनुवाकत्रयेणैवं ये मन्त्राः परिकीर्तिताः ।
तेषां त्वरितरुद्राख्या प्रसिद्धा मन्त्रकल्पतः ॥ ३१४ ॥

मन्त्रकल्पेष्वित्यर्थः ।

रुद्राध्यायजपे जप्याः कल्पेषु परिकीर्तिताः ।

रुद्राध्यायजपशेषत्वेन विनियोगमाह—रुद्रेति ।

इत्यष्टादशोऽनुवाकः[1]

[1] इतः परं षट्त्रिंशानुवाकपर्यन्तं न विवृतम् ।

**प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तक-**
**स्तेनान्नेनाप्यायस्व ॥**

हृदयस्पर्शमन्त्रोऽयमधुना परिकीर्त्यते ॥ ३१५ ॥
वायूनामिन्द्रियाणां च दृढग्रथनसाधनम् ।
भवसि त्वमहंकार हृदयस्थानसंस्थितः ॥ ३१६ ॥
तवाभिमानी रुद्रो यस्तद्रूपस्त्वं विनाशकः ।
दुःखस्य भूत्वा विश मां प्रविष्टो मद्वपुर्भव ॥ ३१७ ॥
अन्नेन तेन भुक्तेन मामाप्यायस्व वर्धय ।

त्वं दुःखस्य विनाशको भूत्वेत्यन्वयः ।

इति सप्तत्रिंशोऽनुवाकः

**अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।**
**ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥**

क्षुदादिजन्यविक्षेपे प्रशान्ते सति चेतसः ॥ ३१८ ॥
स्वस्वरूपानुसंधाने हेतुर्मन्त्र उदीर्यते ।

चेतसो विक्षेप इत्यन्वयः ।

हृत्पुण्डरीकमध्यस्थं नभः स्वाङ्गुष्ठमानकम् ॥ ३१९ ॥
तत्रावस्थितबुद्धिश्च तावती परिकीर्तिता ।
तदवच्छिन्नजीवश्च पुरुषोऽङ्गुष्ठमानकः ॥ ३२० ॥
स्वीयज्ञानक्रियाशक्त्या स चाङ्गुष्ठं समाश्रितः ।
चकारान्मस्तकं तद्वदेवं चापादमस्तकम् ॥ ३२१ ॥
व्यापीत्यर्थः स चोपाधिं विना वास्तवरूपतः ।

नियन्ता सर्वजगतो विश्वभुक् प्रभुरीश्वरः ॥ ३२२ ॥
अनेन भोजनेनायं प्रीतो भवति शाश्वतः ।

इत्यष्टत्रिंशोऽनुवाकः

**मेधा देवी जुषमाणा न आगा-**
**द्विश्वाची भद्रा सुमनस्यमाना ।**
**त्वया जुष्टा जुषमाणा दुरुक्ता-**
**न्बृहद्वदेम विदथे सुवीराः ॥**

जीवेश्वरैक्यज्ञानाप्त्यै मेधा देवी प्रशस्यते ॥ ३२३ ॥
ग्रन्थार्थधारणे शक्तिर्मेधा तदभिमानिनी ।
देवी नः प्रीयमाणागादायात्वस्मान्प्रतीश्वरी ॥ ३२४ ॥
विश्वमञ्चति विश्वाची सर्वसंग्रहणक्षमा ।
अनुग्राहकमस्माकमिच्छन्ती शोभनं मनः ॥ ३२५ ॥
भद्रात एव कल्याणी देव्यागच्छतु नः प्रति ।
त्वया जुष्टा गृहीतास्तु वयं वेदबहिःस्थितान् ॥ ३२६ ॥
श्रेयोविरोधिनः शब्दानभजन्तः सुपुत्रकाः ।

गृहीताः, अनुगृहीता इत्यर्थः ।

सुवीराः साधुशिष्याश्च विदथेऽनुष्ठिते सति ॥ ३२७ ॥
यागे विशुद्धमनसो ब्रह्म यत्कथयाम तत् ।

**त्वया जुष्ट ऋषिर्भवति देवि**
**त्वया ब्रह्मा गतश्रीरुत त्वया ।**
**त्वया जुष्टश्चित्रं विन्दते वसु**
**सा नो जुषस्व द्रविणेन मेधे ॥**

त्वया देवि गृहीतोऽनु स्यादतीन्द्रियदर्शनः ॥ ३२८ ॥
त्वया जुष्टः पुमान्ब्रह्मा भवतीह प्रजापतिः ।

अनुगृहीत इत्यन्वयः । ब्रह्मा; हिरण्यगर्भ इत्यर्थः ।

उतापि च त्वया जुष्टः प्राप्तसंपद्भवत्ययम् ॥ ३२९ ॥
अत एव त्वया जुष्टो गोभूहेमादिकं धनम् ।
लभते विविधं मेधे सा त्वं स्वेन गृहाण नः ॥ ३३० ॥

स्वेन; धनेनानुगृहाणेत्यर्थः ।

इत्येकोनचत्वारिंशोऽनुवाकः

**मेधां म इन्द्रो ददातु मेधां देवी सरस्वती ।**
**मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजा ॥**

मेधां ददातु मे शक्रो दत्तां देवी सरस्वती ।
उभावप्यश्विनौ देवौ मह्यं मेधां प्रयच्छताम् ॥ ३३१ ॥
पद्ममालासमायुक्तौ शिष्टं स्पष्टार्थमीरितम् ।

इति चत्वारिंशोऽनुवाकः

**अप्सरासु या मेधा गन्धर्वेषु च यन्मनः ।**
**दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषताम् ॥**

या मेधास्ति सुरस्त्रीषु गन्धर्वेषु च यन्मनः ॥ ३३२ ॥
मेधात्मकं देवनिष्ठा या च मेधा मनुष्यजा ।
मनुष्येषु बहुज्ञेषु स्थिता सा सकला च माम् ॥ ३३३ ॥
जुषतां सेवतां मेधा सर्वकामदुघा सती ।

इत्येकचत्वारिंशोऽनुवाकः

# YĀJÑIKYUPANIṢAD-VIVARAṆA

BY

PURUSOTTAMĀNANDATĪRTHA



THE AD[illegible] LIBRARY AND RESEARCH CENTRE

*The Adyar Library Series—No. 71*

GENERAL EDITOR:

G. SRINIVASA MURTI, B.A., B.L., M.B & C.M., VAIDYARATNA

*Director, Adyar Library*

# YĀJÑIKYUPANIṢAD-VIVARAṆA

BY

# PURUṢOTTAMĀNANDATĪRTHA

# याज्ञिक्युपनिषद्विवरणम्

पुरुषोत्तमानन्दतीर्थकृतम्

# YĀJÑIKYUPANIṢAD-VIVARANA

BY

PURUSOTTAMĀNANDATĪRTHA

EDITED BY

PANDIT V. KRISHNAMACHARYA

AND

PANDIT K. RAMACHANDRA SARMA

THE ADYAR LIBRARY

1949

# INTRODUCTION

THE *Yājñikyupaniṣad* with a commentary in the form of *Kārikās* by S'rī Puruṣottamānandatīrtha is now published for the first time. The edition is based on a single manuscript found in the Adyar Library; so far no other manuscript of this commentary has come to our notice. The *Yājñikyupaniṣad* is also known as *Nārāyaṇopaniṣad*. There is the *Mahānārāyaṇopaniṣad* belonging to the *Atharvaveda*, edited by Col. Jacob, which has been utilised by Bloomfield in preparing his Vedic Concordance. The latter is only another version of this *Yājñikyupaniṣad*.

The *Taittirīyayajurveda* is divided into the *Saṁhitā* and the *Brāhmaṇa* portions. The Brāhmaṇa has the three *Prapāṭhakas* for the main *Brāhmaṇa* portion, and then the *Āraṇyaka* portion. Sāyaṇa divides the *Āraṇyaka* into ten *Prapāṭhakas*, and the three *Prapāṭhakas*, 7 to 9 form what is well known as the *Taittirīyopaniṣad*. The next one is accepted as a *Khila* (supplement) and that is the *Yājñikyupaniṣad*. Bhaṭṭabhāskara takes the whole of the *Taittirīyopaniṣad* as a single *Pras'na*, and there is also a slight difference in him from the arrangement of the *Pras'nas* found in Sāyaṇa. Otherwise the texts are the same.

S'aṅkarācārya comments only on the three *Pras'nas* of the *Upaniṣad* and he calls them the three *Vallīs*, namely, the *Sikṣā*, *Brahmānanda* and *Bhṛgu*. Raṅgarāmānuja follows the same order as Bhaṭṭabhāskara, and comments on the

*Yājñikyupaniṣad* too. Sāyaṇa accepts the *Taittirīyopaniṣad* portion as having two main sections, the *Sāṁhityupaniṣad* and the *Vāruṇyupaniṣad.* The latter is in two *Prapāṭhakas.* There is no difference in the text; the difference is only in nomenclature. Sāyaṇa takes the *Yājñikyupaniṣad* as a natural squence of the *Taittirīyopaniṣad.* His colophons are as follows:

इति श्रीमत्सायणाचार्यविरचिते . . . . कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये (1) सांहित्यामुपनिषदि (2) वारुण्यपरनामधेयसांहित्यामुपनिषदि ब्रह्मवल्ल्याख्यो द्वितीयोऽनुवाकः; ब्रह्मवल्ल्याख्यस्तृतीयोऽनुवाकः।

Regarding the significance of the term *Yājñikyupaniṣad,* there is a slight difference between Sāyaṇa and Bhaṭṭabhāskara. Their respective explanations are given below:

Sāyaṇa

चतुर्थप्रपाठके यज्ञोपयुक्ता अपि मन्त्रास्तत्र तत्राम्नाताः। अतस्तद्रूपोपनिषद्याज्ञिकी।

Bhaṭṭabhāskara

अयं समस्तः प्रश्नो याज्ञिक्य उपनिषद उच्यन्ते, यज्ञात्मना भगवता नारायणेन दृष्टत्वात् नारायणप्रतिपादकत्वात्।

About the contents and divisions of the *Upaniṣad,* Sāyaṇa makes the position clear:

सेयं तैत्तिरीयोपनिषत् त्रिविधा। सांहिती वारुणी याज्ञिकी चेति। तत्र प्रथमप्रपाठके संहिताध्ययनस्योक्तत्वात् तद्रूपोपनिषत् सांहिती। द्वितीयतृतीययोः प्रपाठकयोर्या ब्रह्मविद्याभिहिता तस्याः संप्रदायप्रवर्तको वरुणः। तस्मात्तदुभयरूपोपनिषद्वारुणी। चतुर्थप्रपाठके etc.

The colophons call the *Upaniṣad* both *Yājñikyupaniṣad* and also *Nārāyaṇopaniṣad,* in Sāyaṇa:

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्युपनिषदि।

Both Sāyaṇa and Bhaṭṭabhāskara say that in the *Taittirīyopaniṣad* proper S'*ikṣā* is the subject matter of the first of three sections, though Bhaṭṭabhāskara does not divide the text into three sections. In the beginning of the second section, Bhaṭṭabhāskara says that it is *Ānandavallī*. The words of Bhaṭṭabhāskara in the beginning of the two sections are:

(1) वर्णाद्यनुशासनं शिक्षाशास्त्रमवसरे अवधानार्थं स्मारयति ।

(2) इयमानन्दवल्ली आनन्दब्रह्मणो वैभवप्रतिपादनार्था ।

He does not say anything about the third section. He simply starts the explanation of the passage: भृगुर्वै वारुणिः

The commentary now published is a very lucid one, in simple *Kārikās*, with an occasional note in prose on the *Kārikās*. I do not know if these prose notes formed a part of the commentary or are only additional notes added later by another person. We know only the name of the author and nothing more. He pays homage to S'ivarāmatīrtha in the 2nd verse in the beginning. In the first verse he refers to ancient Teachers in the Advaita tradition. The manuscript on which the edition is based was written on the 11th day in the bright half of *Ās'vina* on a Tuesday in the Vikrama year 1718, S'aka year 1583 (1661 A.D.) by Gaṅgādhara son of Vis'vanātha (a great astronomer).

The third verse in this commentary appears (with very slight variation) in the commentary of Sāyaṇa, and the following verses are only verse adaptations of the passages in Sāyaṇa. I cite the passage from Sāyaṇa for comparison with the verses in this commentary.

वारुण्युपनिषद्युक्ता ब्रह्मविद्या ससाधना ।
याज्ञिक्यां खिलरूपायां सर्वशेषोऽभिधीयते ॥

यथा बृहदारण्यके सप्तमाष्टमाध्यायौ खिलकाण्डत्वेनाचार्यैरुदाहृतौ तथेयं नारायणीयाख्या याज्ञिक्युपनिषदपि खिलकाण्डरूपा तल्लक्षणोपेतत्वात् । कर्मोपासनब्रह्मकाण्डेषु त्रिष्वपि यद्यद्वक्तव्यमवशिष्टं तस्य सर्वस्याभिधानेन प्रकीर्णरूपत्वं खिलत्वम् ।

At the end of the commentary, in verses 543 ff. the author says that his commentary is practically a metrical abridgment of the elaborate commentary of Sāyaṇa.

> विद्यारण्यमुनिप्रोक्तबृहद्व्याख्यानुसारतः ।
> पुरुषोत्तमतीर्थेन ग्रन्थविस्तरभीतितः ॥
> याज्ञिक्यां कतिचिन्मन्त्रा व्याख्याताः पद्यरूपतः ।
> यथोपयोगमेवात्र संग्रहेण यथामति ॥
> विद्यारण्यैः समस्तेयं व्याख्याता याज्ञिकी शुभा ।

There is only one copy of the manuscript in the Adyar Library and no other copy is known elsewhere. It is a paper manuscript bearing the shelf number 40-B. 38. There are 36 folia, the commentary beginning on the second page of the first folio. The commentary ends on the fourth line on the first page of the last folio. There are on an average 11 lines a page and 32 syllables a line. The manuscript contains both the text and the commentary. The writing is quite legible; the matter is fairly correct, corrections are carried out in the margins. The manuscript begins : श्रीगुरुभ्यो नमः । श्रीगणेशाय नमः before the *Kārikā* श्रीरामं काशिकाकान्तम् । The name of the author comes at the end of the commentary in Kārikā 543. He says that he has followed the Southern recension : द्राविडः पाठ आद्दतः (545).

The Vikrama and the S'aka years given do not agree; I gave the figures that appear in the manuscript.

This *Nārāyaṇopaniṣad* must be differentiated from the Upaniṣad of the same name included in the *Vaiṣṇavopaniṣads*

of the Adyar Library Series as No. 9, which too belongs to the *Yajurveda*.

Pandit V. Krishnamacharya and Pandit K. Ramachandra Sarma have prepared this edition from the manuscript available in the Adyar Library with their usual care, and this is an addition to many contributions from them in the Adyar Library Series. When the manuscript was brought to my notice, I felt that this requires to be published, having regard to the importance of the text and the special nature and the lucidity of the commentary. The Vasanta Press has finished the printing with great promptness, at the same time keeping up their standard.

*Adyar Library*
10th December, 1949 C. KUNHAN RAJA

# उपोद्घातः

> " ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ।
> ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा ॥ "

इति प्रधानतया सर्वसंप्रतिपन्नासु दशसूपनिषत्स्वन्यतमा तैत्तिरीयोपनिषत् । सा चारण्यकस्य पञ्चमषष्ठप्रपाठकरूपा । प्रथमः प्रपाठकोऽस्याः शिक्षावल्ली, आनन्दवल्ली, भृगुवल्ली चेति त्रिधा विषयतो विभिन्नः । द्वितीयस्तु 'अम्भस्य पारे' इत्यारभ्य 'तस्माद्ब्रह्मणो महिमानमित्युपनिषत्' इत्यन्त इत्येव द्राविडदेशे संप्रदायसमागतः क्रमः । एतं क्रममनुसृत्यैव भगवत्पादशंकराचार्याः प्रथमस्य प्रपाठकस्य, भट्टभास्करादयः प्रपाठकद्वयस्य च भाष्यमभाषिषत । तत्र द्वितीयः प्रपाठको याज्ञिक्युपनिषदिति नारायणोपनिषदिति च क्वचित्क्वचिद्व्यवह्रियते । एवं स्थिते सायणाचार्यैः प्रथमप्रपाठकस्थास्तिस्रो वल्लीः पृथक्पृथक्संख्याकान् प्रपाठकान् परिकल्प्य आरण्यकस्यान्तिमौ द्वौ प्रपाठकौ पञ्चमषष्ठात्मना पठित्वा उपनिषद्भागं सप्तमादिदशमान्तांश्चतुरः प्रपाठकान् मन्यते । गुरुशिष्यसंप्रदायागतेऽध्ययनक्रमे कथमियान् भेदः संजात इति विस्मयावहमिदम् ।

अस्य विवरणस्य कर्ता पुरुषोत्तमानन्दतीर्थ आत्मानं श्रीशिवरामानन्दतीर्थशिष्यं स्वयमेव निर्दिशति । अस्य विशिष्य कालनिर्णये न पर्याप्तं प्रमाणमुपलभ्यते । परंतु विद्यारण्यमनुसृत्य विवरणमिदं कुर्वतानेन स्वस्य

तदनन्तरकालिकत्वं विवृतं भवति । इदं च मुद्रणम् अडयार्-पुस्तकालयस्थ-मेकमेव कोशमवलम्ब्य साधितम्[1] । तस्यान्त्ये कोशलेखनसमयः सं १७१८, शक १५८३ इत्युक्तः । स च समयः अङ्गलसंवत्सररीत्या 1661 A.D. इति समायाति । आतः प्रायशः पञ्चदशे षोडशे वा अङ्गलाब्दशतके ग्रन्थ-कर्तायं बभूवेति वक्तुं पार्यते । अडयार्-पुस्तकालये वेदान्तसिद्धान्त-चूडामणिरिति कश्चनामुद्रितो ग्रन्थस्तालपत्रेष्वान्ध्रलिप्यां लिखितो वर्तते । तत्र चान्ते "इति श्रीशिवरामानन्दतीर्थपूज्यपादशिष्य . . . . विरचितो वेदान्तसिद्धान्तचूडामणिः समाप्तः" इति दृश्यते । तत्र 'शिष्य' इत्यस्यान-न्तरं ग्रन्थकर्तृनाम त्रुटितम् । प्रायेण सोऽपि ग्रन्थोऽनेनैव पुरुषोत्तमानन्द-तीर्थेन कृतो भवितुमर्हतीत्यस्ति वितर्कितुमवकाशः ।

वे. कृष्णमाचार्यः

[1] See for the details of this MS. K. Madhavakrishna Sarma's notes on MSS. published on page 31, Vol. V. part I of the *Adyar Library Bulletin*, 1941.

## तैत्तिरीयोपनिषदि

# याज्ञिक्युपनिषद्विवरणम्

### श्रीपुरुषोत्तमानन्दतीर्थविरचितम्

श्रीरामं काशिकाकान्तं शंकराचार्यमुत्तमम् ।
सुरेशं वार्तिकाचार्यं नौमि विद्यागुरूनपि ॥ १ ॥

ब्रह्मामृतप्रचुरशंकररस्यराज-
द्रामायणामृतरसज्ञरसज्ञविज्ञान् ।
श्वःश्रेयसप्रदकृपानिलयान् प्रणौमि
श्वःश्रेयसाय महते **शिवरामतीर्थान्** ॥ २ ॥

वारुण्युपनिषद्युक्ता ब्रह्मविद्या ससाधना ।
याज्ञिक्यां खिलरूपायां सर्वशेषो विधीयते ॥ ३ ॥

बृहदारण्यके यद्वत्सप्तमाष्टमयोर्मतम् ।
खिलकाण्डत्वमत्रापि याज्ञिक्यास्तद्वदिष्यते ॥ ४ ॥

वक्तव्यमवशिष्टं यत्कर्मकाण्डादिषु त्रिषु ।
तत्सर्वमुच्यते यत्र तस्य स्यात्खिलकाण्डता ॥ ५ ॥

अम्भस्य पार इत्यादौ ब्रह्मतत्त्वं समीरितम् ।
उपास्तिरुक्तादित्यो वा एष इत्यादिके हरेः ॥ ६ ॥

कर्माण्युक्तानि भूरन्नमित्यादौ तत्र कर्मणाम् ।

बाहुल्याद्याज्ञिकीत्येषा ननु चोपनिषत्कथम् ॥ ७ ॥
आदौ ब्रह्मोक्तितोऽन्ते स्यात्तद्धीहेतूक्तितश्च सा ।

आदाविति । अन्त इति; अन्ते च ब्रह्मज्ञानसाधनोक्तेः, सा; उपनिषद्भवतीत्यर्थः ॥

**अम्भस्य पारे भुवनस्य मध्ये**
**नाकस्य पृष्ठे महतो महीयान् ।**
**शुक्रेण ज्योतींषि समनुप्रविष्टः**
**प्रजापतिश्चरति गर्भे अन्तः ॥**

आदावाद्यानुवाकस्य ब्रह्मतत्त्वावबोधिकाः ॥ ८ ॥
ऋचः काश्चन तत्रैषा प्रथमा संप्रवर्तते ।
जलस्य परतीरे यो लोकालोकादिको महान् ॥ ९ ॥
यः पृथिव्यादिलोकस्य मध्ये मेर्वादिको महान् ।
स्वर्गलोकस्य पृष्ठे यो ब्रह्मलोकादिको महान् ॥ १० ॥
ततोऽप्यस्मात्समन्ताच्च महेशः स्यान्महत्तरः ।
अनुप्रविष्टश्चेतांसि जीवचैतन्यरूपतः ॥ ११ ॥
गर्भे ब्रह्माण्डरूपेऽन्तर्विराड्रूपोऽवतिष्ठते ।
मायया व्यापकोऽपीशो ब्रह्माण्डस्थो विराट्तया ॥ १२ ॥
देहेषु जीवरूपेण स्थित इत्यर्थ ईरितः ।

जलस्य ; समुद्रजलस्येत्यर्थः । विराट्तया; विराड्रूपेणेत्यर्थः ।

अग्निर्मूर्धा चक्षुषीति विराड्रूपं च मुण्डके ॥ १३ ॥
अग्निः प्रकाशसंयुक्तो द्युलोकोऽत्राभिधीयते ।

इति मुण्डके कथितमित्यर्थः ।

**यस्मिन्निद्ꣳ सं च विचैति सर्वं**
**यस्मिन् देवा अधि विश्वे निषेदुः ।**
**तदेव भूतं तदु भव्यमा इदं**
**तदक्षरे परमे व्योमन् ॥**

समेति च व्येतिचेदं यस्मिन्नव्याकृते जगत् ॥ १४ ॥
समुत्पन्नं संगतं स्यात्सृष्टिकालेऽथ संहृतौ ।
विलीनं विगतं च स्याद्यस्मिन्नव्याकृतेऽधिके ॥ १५ ॥
अधिशब्दोऽधिकार्थः स्यादधिका इति युज्यते ।
देवा हिरण्यगर्भाद्या निषेदुर्नितरां श्रिताः ॥ १६ ॥
तदेवाव्याकृतं भूतमतीतं जगदुच्यते ।
भविष्यद्वर्तमानं च तदेवासीदिदं जगत् ॥ १७ ॥
आसीदर्थक आकारो यद्वाश्चर्यस्य वाचकः ।
तदप्यव्याकृतं नित्ये समुत्कृष्टे परात्मनि ॥ १८ ॥

श्रुतौ शं चेति पाठे सुखमपि प्राप्नोतीत्यर्थः । व्यत्ययेन वा समिति द्रष्टव्यम् ।

**येनावृतं खं च दिवं महीं च**
**येनादित्यस्तपति तेजसा भ्राजसा च ।**
**यमन्तःसमुद्रे कवयो वयन्ति**
**तदक्षरे परमे प्रजाः ॥**

पूर्वमव्याकृतं प्रोक्तं परब्रह्मसमाश्रितम् ।
तेनोपहितचैतन्यं जगद्धेतुरिहोच्यते ॥ १९ ॥
येनान्तरिक्षलोकश्च द्युलोको व्याप्त उच्यते ।
भूलोकश्च चकाराभ्यां देहास्तल्लोकवासिनः ॥ २० ॥

तपत्यनुगृहीतः सन् येनेशेनाखिलं जगत् ।
स्वीयभास्वररूपेण कुरुते संप्रकाशितम् ॥ २१ ॥
रश्मिलक्षणदीप्त्या च संतप्तं कुरुते रविः ।
तत्त्वज्ञा जगतो मध्ये तन्तूनिव वयन्ति यम् ॥ २२ ॥
यथा पटस्वरूपे च तन्तवोऽनुगतास्तथा ।
जगत्यनुगतं ब्रह्म सदा पश्यन्ति सूरयः ॥ २३ ॥
तद्ब्रह्म नित्ये परमे स्वस्मिन् स्थित्वा सृजेत्प्रजाः ।
स्वरूपेऽवस्थितिश्चास्य स्वे महिम्नीति संश्रुता ॥ २४ ॥
आधारान्तरराहित्यं भवेत्स्वस्मिन्नवस्थितिः ।

**यतः प्रसूता जगतः प्रसूती**
**तोयेन जीवान् व्यससर्ज भूम्याम् ।**
**यदोषधीभिः पुरुषान् पशूंश्च**
**विवेश भूतानि चराचराणि ॥**

पूर्वमव्याकृतोपाधि यच्चैतन्यं समीरितम् ॥ २५ ॥
जगत्कारणता तस्य मन्त्रेऽस्मिन् संप्रपञ्च्यते ।
यस्मात्प्रसूतिर्जगतोऽव्याकृतोपहितात्मनः ॥ २६ ॥
प्रसूता संप्रवृत्ता स्यादीकारश्छान्दसः श्रुतौ ।
तत्पञ्चभूतैरसृजद् देहान् भूम्यां नरादिकान् ॥ २७ ॥

व्यचसर्जेति पाठेऽपि व्यससर्जेत्येव विज्ञेयम्। विशेषेणासृजदित्यर्थः ।

यद् व्रीह्याद्युपलक्ष्यान्नं भूत्वा देहांश्चराचरान् ।
विवेश नरपश्वादीन् वृक्षादौ वृष्टिरूपतः ॥ २८ ॥
प्रवेशोऽभ्युपगन्तव्यस्तेनेदं पालितं जगत् ।

श्रुतावपेक्षितं पूरयति—तेनेति । चैतन्येनेत्यर्थः । श्रुतिस्थभूतानी-त्यस्य व्याख्या देहानिति ।

**अतः परं नान्यदणीयसꣳहि**
**परात्परं यन्महतो महान्तम् ।**
**यदेकमव्यक्तमनन्तरूपं**
**विश्वं पुराणं तमसः परस्तात् ॥**

निरूप्यतेऽत्र शुद्धं तत्कारणत्वोपलक्षितम् ॥ २९ ॥
हिरण्यगर्भाद्युत्कृष्टाद्यद्वस्तूत्कृष्टमुच्यते ।
महतो गगनादेर्यन्महान्तं महदीरितम् ॥ ३० ॥
सजातीयादिरहितमिन्द्रियादेरगोचरम् ।
अपरिच्छिन्नरूपं च समस्तजगदात्मकम् ॥ ३१ ॥
अनादिसिद्धं तमसः पृथग्यद्वस्तु वर्तते ।
अतोऽन्यत्परमुत्कृष्टमतिदुर्लक्ष्यवस्तु न ॥ ३२ ॥

न, नास्तीत्यर्थः ।

**तदेवर्तं तदु सत्यमाहु-**
**स्तदेव ब्रह्म परमं कवीनाम् ।**
**इष्टापूर्तं बहुधा जातं जायमानं**
**विश्वं बिभर्ति भुवनस्य नाभिः ॥**

समस्तजगदात्मत्वमुक्तं यत्तत्प्रपञ्च्यते ।
यच्चिन्तनं यथावस्तु तदृतं परिकीर्तितम् ॥ ३३ ॥
वाचा तदुक्तिः सत्यं स्याद्भवेद्ब्रह्मैव तद् द्वयम् ।
विबुधानां परं श्रेष्ठं प्रमाणत्वेन सत्कृतम् ॥ ३४ ॥

ब्रह्म वेदात्मकं वस्तु तदेव ब्रह्म कीर्तितम् ।
यागादि वैदिकं स्मार्तं वापीकूपादि कर्म च ॥ ३५ ॥
ब्रह्मैव लोकस्याधारो दधाति सकलं जगत् ।
अतोऽधिष्ठानरूपं स्यादाधेयं सकलं जगत् ॥ ३६ ॥

भुवनस्य नाभिरित्यस्यार्थमाह—लोकस्याधार इति । बहुधेत्यादि बिभर्तीत्यन्तस्यार्थमाह—दधातीति । धत्त इत्यर्थः ।

**तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ।**
**तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः ॥**

तदेवाग्न्यादिकं शुक्रं नक्षत्राद्यमृतं सुधा ।
हिरण्यगर्भब्रह्मापि तदेव परिकीर्तितम् ॥ ३७ ॥
आपः पञ्चापि भूतानि विराडाख्यप्रजापतिः ।
तदेव तदधिष्ठानं ब्रह्मैव परिकीर्त्यते ॥ ३८ ॥
अविद्यादृष्टितो यद्यद्भाति नानाविधं जगत् ।
विद्यादृष्ट्या समस्तं तद्ब्रह्मैवाखण्डमुच्यते ॥ ३९ ॥

तदेवाग्निरित्यदि चन्द्रमाइत्यन्तस्यार्थमाह—तदेवेति । ब्रह्मैवेत्यर्थः । शुक्रामृतपदयोरर्थमाह—शुक्रमित्यादिसुधेत्यन्तेन । शुक्रं दीप्यमानमिति वाच्यार्थः ॥

**सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।**
**कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥**
**अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम् ।**
**स आपः प्रदुघे उभे इमे अन्तरिक्षं चापि सुवः[1] ॥**

[1] अथो सुवः इत्येव प्रायिकः पाठः ।

"प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम ।"
इति कलस्य नित्यत्वाद् ब्रह्मतास्य न हीति चेत् ॥ ४० ॥
अविद्यादृष्टिविषयं पुराणवचनं हि तत् ।
विद्यादृष्ट्या तु कालस्य ब्रह्मरूपत्वमिष्यते ॥ ४१ ॥
इत्यभिप्रेत्य तस्यापि तस्मादुत्पत्तिरुच्यते ।
निमिर्वसति येष्वक्ष्णः पक्ष्मपातेषु ते स्मृताः ॥ ४२ ॥
निमिषा निमिषा एव निमेषाः परिकीर्तिताः ।

निमिर्नाम जनकस्य पूर्वज आद्यो मिथिलेश्वर आसीदित्युपनिपदि वर्तते । स देववरप्रसादात् पक्ष्मपातेषु तिष्ठतीति ज्ञेयम् ।

पक्ष्मपातप्रमाणोऽयं कालो निमिषशब्दितः ॥ ४३ ॥
ते स्वप्रकाशात्संपूर्णात्परेशादधिजज्ञिरे ।
निमेषेभ्योऽधिकाः काष्ठाः कलास्ताभ्योऽधिका मताः ॥ ४४ ॥
अष्टादश निमेषास्तु काष्ठा इत्यादिकस्मृतेः ।
चकाराभ्यामनुक्तस्य लवादेरपि संग्रहः ॥ ४५ ॥
तच्च सर्वेश इत्युक्त्या विस्पष्टं परिकीर्तितम् ।
लवत्रुट्यादिकाः सर्वे समुत्पन्नाः परात्मनः ॥ ४६ ॥
नलिनीपत्रसंहत्यां सूक्ष्मसूच्या विभेदने ।
दले दुले तु यः कालः स कालो लववाचकः ॥ ४७ ॥
लवैस्त्रुटिः स्यात् त्रिंशद्भिरित्याद्युक्तं मनीषिभिः ।
पक्षमासादयः सर्वे महेशादधिजज्ञिरे ॥ ४८ ॥
संवत्सरो महेशानात्कल्पतां प्रभवादिकः ।
समुत्पन्नोऽत एवायं समर्थः स्वप्रयोजने ॥ ४९ ॥

कल्पन्तामिति पाठेऽपि सर्वे कालविशेषाः स्वस्वप्रयोजनसमर्था इति योज्यम् ।

स कालोपहितस्तत्तत्कालौचित्येन दुग्धवान् ।
जलोपलक्षितां पृथ्वीं प्राणिनामभिकाङ्क्षितम् ॥ ५० ॥
भोग्यं संपादयामास पृथिव्यां परमेश्वरः ।

स आपः प्रदुघ इत्यस्य तात्पर्यमाह—प्राणिनामित्यादिना ।

अन्तरिक्षं सुवः स्वर्गमपि चेमे उभे अपि ॥ ५१ ॥
प्रदुघे स्थानयोर्भोग्यं तयोरजनयत्प्रभुः ।

अपिचेति अथोशब्दार्थः ।

**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।**
**न तस्येशे कश्चन तस्य नाम महद्यशः ॥**
**न संदृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा मनीषा मनसाभिक्लृप्तो**
**य एनं विदुरमृतास्ते भवन्ति ॥**

कालादिसर्वहेतुत्वात्सर्वत्रानुगतत्वतः ॥ ५२ ॥
कुतो न गृह्यते सर्वैरिति चेत्तन्न युज्यते ।
ऊर्ध्वाद्याकाररहित्याद्रूपादेरप्यभावतः ॥ ५३ ॥
पुरुषः कश्चिदप्येनं न गृह्णात्यूर्ध्वताकृतिम् ।
तिर्यगाकारयुक्तं वा क्वचिन्मध्ये स्थितं च वा ॥ ५४ ॥
तस्यात्मनो न कोऽपीशे नेष्ट इत्यर्थ ईरितः ।
मम ग्रहणसिद्ध्यर्थं त्वमीदृग्रूपवान् भव ॥ ५५ ॥

इति तं परमात्मानं नियन्तुं न हि शक्नुयात् ।
अत एवात्मनो नाम महद्यश इति स्थितम् ॥ ५६ ॥
अतिस्वातन्त्र्यतस्तस्य यशसोऽभ्यधिकत्वतः ।
न दृष्टिविषये रूपं तिष्ठत्यस्य परात्मनः ॥ ५७ ॥
कुशलोऽपि पुमान् कश्चिच्चक्षुषा तं न पश्यति ।
कथं ब्रह्मावबोधः स्यादिति चेदभिधीयते ॥ ५८ ॥
लौकिकार्थमनोवृत्तीर्यदीष्टे तेन चेतसा ।
निश्चितो हृदयस्थेन परमात्मा भवेदयम् ॥ ५९ ॥
मनो हि योगयुक्तं सद्वृत्तीरन्या नियच्छति ।
तेनैकाग्रेण मनसा परमात्मानुभूयते ॥ ६० ॥
एकाग्रमनसैनं ये साक्षात्कुर्वन्ति ते नराः ।
देहात्प्राणविनिष्क्रान्तिर्मरणं तद्विवर्जिताः ॥ ६१ ॥

**अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ ॥**

उक्तार्थस्य दृढत्वाय प्रदेशान्तरवर्तिनः ।
मन्त्रानुदाहरत्यद्भ्यः संभूत इति वाक्यतः ॥ ६२ ॥
अद्भ्यः संभूत इत्येतत्प्रतीकग्रहणं कृतम् ।
प्रदर्शनार्थं कृत्स्नस्यानुवाकस्येति मन्यताम् ॥ ६३ ॥
तत्रानुवाके प्रोक्तं हि य एवमिति वाक्यतः ।
मरणेन विहीनत्वं ब्रह्मविज्ञानशालिनः ॥ ६४ ॥

"य एवं विद्वानमृत इह भवति" इति वाक्येनेत्यर्थः ।

हिरण्यगर्भ इत्याद्या ऋचोऽष्टौ याः समीरिताः ।
संहितायां चतुर्थे हि काण्डे त्वाद्यप्रपाठके ॥ ६५ ॥

आत्मोपलक्षकत्वेन सूत्रादेरभिधानतः ।
ता अप्यत्रोपयुक्ताः स्युरित्येवमवगम्यताम् ॥ ६६ ॥

प्रपाठके या उक्तास्ता अप्यत्रोपयुक्ताः। तत्र हेतुः, आत्मेत्यादिः ॥

**एष हि देवः प्रदिशोऽनुसर्वाः**
**पूर्वो हि जातः स उ गर्भे अन्तः ।**
**स विजायमानः स जनिष्यमाणः**
**प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः ॥**
**विश्वतश्चक्षुरुत विश्वतोमुखो**
**विश्वतोहस्त उत विश्वतस्पात् ।**
**सं बाहुभ्यां नमति सं पतत्रै-**
**र्द्यावापृथिवी जनयन् देव एकः ॥**

यथा हिरण्यगर्भाद्याः परमात्मोपलक्षकाः ।
तथा जगद्विराट् चैनमात्मानमुपलक्षयेत् ॥ ६७ ॥
एष स्वयंप्रकाशात्मा प्राच्याद्याः सकला दिशः ।
अनुप्रविश्य स्थितवान् प्रसिद्धं हि प्रवेशनम् ॥ ६८ ॥
हिरण्यगर्भरूपत्वात्पूर्वोत्पन्नः स एव हि ।
ब्रह्माण्डरूपगर्भस्य मध्येऽसावेव वर्तते ॥ ६९ ॥
प्रत्यङ्ङन्नमयादिभ्योऽप्यान्तरः स महेश्वरः ।
मुखा मुख्यस्य देहादेरध्यक्षत्वेन सोऽच्युतः ॥ ७० ॥
रूपादिबुद्धिद्वाराणि चक्षुरादीनि सर्वतः ।
यस्यासौ तादृशस्तिष्ठत्यधिष्ठानतयास्य च ॥ ७१ ॥

**अस्य ;** जगत इत्यर्थः ।

ब्रह्माण्डदेहवत्त्वेन सर्वदेहात्मकत्वतः ।
तदक्ष्यादियुतत्वात्स विश्वतश्चक्षुरादिमान् ॥ ७२ ॥
धर्माधर्माख्यबाहुभ्यां सर्वं संनमतीश्वरः ।
वशी करोति सर्वं च जगदित्यर्थ ईरितः ॥ ७३ ॥
पतत्रैः पतयिष्णुत्वान्महाभूतैश्च पञ्चभिः ।
सर्वं संनमतीशानो जगदुत्पादयत्ययम् ॥ ७४ ॥
एवं देवः स्वप्रकाशो द्यावाभूम्यादिकं प्रभुः ।
उत्पादयञ्जगत्कृत्स्नमेक एवावतिष्ठते ॥ ७५ ॥

**वेनस्तत्पश्यन् विश्वा भुवनानि**
**विद्वान् यत्र विश्वं भवत्येकनीडम् ।**
**यस्मिन्निदꣳ सं च वि चैकꣳ स**
**ओतः प्रोतश्च विभुः प्रजासु ॥**
**प्र तद्वोचे अमृतं नु विद्वान्**
**गन्धर्वो नाम निहितं गुहासु ।**
**त्रीणि पदा निहिता गुहासु**
**यस्तद्वेद सवितुः पिता सत् ॥**

श्रद्धाप्रकर्षमुक्तेऽर्थे कर्तुं मन्त्रद्वयेन च ।
संदर्शयति वृत्तान्तं गन्धर्वस्य श्रुतिः स्वयम् ॥ ७६ ॥
जगत्समस्तं यत्रात्मन्येकनीडं भवत्यदः ।
एकत्वेन स्थितिं गच्छत्तादात्म्यं प्रतिपद्यते ॥ ७७ ॥
तद्वस्त्वनुभवन् साक्षात्सर्वाणि भुवनानि च ।
विद्वान्यो वर्तते जानन्नात्मत्वेनाखिलं जगत् ॥ ७८ ॥
आत्मसाक्षात्कृतौ सर्वं तद्रूपमिति भाति हि ।

स वेनसंज्ञो गन्धर्वः सर्वेषां बुद्धिषु स्थितम् ॥ ७९ ॥
अमृतं नाशरहितं तद्वस्तु स्वानुभूतितः ।
विद्वान् प्रवोचे शिष्येभ्यः प्रोवाच खलु सादरम् ॥ ८० ॥

स्वानुभवेन विद्वानित्यर्थः । नुशब्दार्थः खल्विति ।

वेनेन दृष्टे यस्मिंश्च परमात्मनि वस्तुनि ।
इदं सर्वं समुत्पन्नं विलीनं च भवेज्जगत् ॥ ८१ ॥
एकमद्वयतत्त्वात्मा स व्यापी सन्महेश्वरः ।
दीर्घतन्तुवदोतः स्यात्प्रजासु सकलास्वपि ॥ ८२ ॥
प्रोतस्तिर्यक्तन्तुवच्च सर्वत्रैवावतिष्ठते ।
जाग्रत्स्वप्नादिरूपाणि त्रीणि स्थानानि बुद्धिषु ॥ ८३ ॥
स्थितानि यस्तु गन्धर्वस्तदधिष्ठानमीश्वरम् ।
विजानाति स गन्धर्वो भवति स्वपितुः पिता ॥ ८४ ॥
ब्रह्मज्ञो ब्रह्मरूपेण जगदुत्पादकत्वतः ।
भवत्युत्पादकस्यापि स्वयमुत्पादकः पितुः ॥ ८५ ॥
यस्ता विजानात्सवितुः पिता सदिति हि श्रुतिः ।

तदिति; जागराद्यधिष्ठानमित्यर्थः ॥

**स नो बन्धुर्जनिता स विधाता**
**धामानि वेद भुवनानि विश्वा ।**
**यत्र देवा अमृतमानशाना-**
**स्तृतीये धामान्यभ्यैरयन्त ॥**
**परि द्यावापृथिवी यन्ति सद्यः**
**परि लोकान् परि दिशः परि सुवः ।**

**ऋतस्य तन्तुं विततं विचृत्य**
**तदपश्यत्तदभवत्प्रजासु ॥**

व्यवहारदशायां च सर्वप्राण्युपकारिता ॥ ८६ ॥
तद्दर्शिमुक्तिदत्वं च मन्त्राभ्यां तस्य कथ्यते ।
स नो बन्धुः स्वपुण्येन हितकृत्त्वान्महेश्वरः ॥ ८७ ॥
जनिता सर्वहेतुत्वात् स निर्माताखिलस्य सन् ।
सर्वानुच्चावचाँल्लोकांस्तेषु स्थानानि यानि च ॥ ८८ ॥
योग्यानि देवतादीनां तानि जातानि सर्वदृक् ।
यत्र तृतीये स्वर्गाख्ये देवा इन्द्रादयोऽमृतम् ॥ ८९ ॥
पिबन्तः प्राप्तवन्तश्च स्वीयस्थानानि सर्वतः ।
तत्समस्तं विदित्वायं तत्तत्कर्मानुसारतः ॥ ९० ॥
फलं प्रयच्छतीत्यर्थो मन्त्रस्यास्य प्रकीर्तितः ।
ये स्युर्मुमुक्षवस्ते तु ब्रह्मतत्त्वार्थवेदिनः ॥ ९१ ॥
द्यावाभूमीद्वयं सद्यः परितो व्याप्नुवन्ति च ।
अन्तरिक्षादिकाँल्लोकान्प्राच्याद्याः सकला दिशः ॥ ९२ ॥
स्वर्गलोकं च परितो यन्ति सर्वात्मकत्वतः ।
सत्यस्य ब्रह्मणस्तन्तुमविच्छेदेन संस्थितम् ॥ ९३ ॥
विस्तीर्णं स्याद्यथा शास्त्रान्निश्चित्य गुरुतश्च तत् ।
यः साक्षात्कृतवान् ब्रह्म स प्रजास्वभवच्च तत् ॥ ९४ ॥
श्रुत्यन्तरं ब्रह्म वेद ब्रह्मैव भवतीति हि ।

**परीत्य लोकान् परीत्य भूतानि**
**परीत्य सर्वाः प्रदिशो दिशश्च ।**

**प्रजापतिः प्रथमजा ऋतस्या-**
**त्मनात्मानमभिसंबभूव ॥**

अम्भस्येत्यादिना प्रोक्ता ब्रह्मविद्या निगम्यते ॥ ९५ ॥
सत्यस्य ब्रह्मणो ह्याद्यकार्यरूपः प्रजापतिः ।
हिरण्यगर्भो भूरादीन् लोकान्देवनरादिकान् ॥ ९६ ॥
देहान्परीत्य विदिशः प्राच्यादिकदिशोऽपि च ।
सर्वतो व्याप्य समये सृष्टेः सृष्ट्वाखिलं जगत् ॥ ९७ ॥
स्थितिकाले च रक्षित्वा सत्याद्यात्मानमाप्तवान् ।
आत्मना स्वस्वरूपेण तद्गोचरविबोधतः ॥ ९८ ॥

**सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।**
**सनिं मेधामयासिषम् ॥**

प्रार्थ्यते ब्रह्मलाभार्थमन्तर्यामी महेश्वरः ।
सीदत्यस्मिञ्जगत्सर्वमित्यव्याकृतमुच्यते ॥ ९९ ॥
सदःशब्देन तस्यायं पतिः पालयिता स्मृतः ।
अन्तर्यामी तमीशानं प्राप्तवानस्म्ययासिषम् ॥ १०० ॥
शीघ्रं संप्राप्नवानीति मत्वा भूतार्थकीर्तनम् ।

इति मत्वा; इति विवक्षयेत्यर्थः ।

अचिन्त्यचित्रजगतोऽनायासेन कृतत्वतः ॥ १०१ ॥
आश्चर्यरूपमिन्द्रस्य देवराजस्य च प्रियम् ।
कदा लप्स्येऽहमित्येवमिन्द्रोऽप्याशास्ति हीश्वरम् ॥ १०२ ॥
सर्वैरन्यैरपेक्ष्यं च सनिं कर्मफलात्मकम् ।
क्रियाफलप्रदातारं श्रुताधीतस्य धारणे ॥ १०३ ॥

शक्तिं मेधां प्रयच्छन्तमित्यध्याहृतिरिष्यते ।

**उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम ।**
**पशूꣳश्च मह्यमावह जीवनं च दिशो दिश ॥**

वह्न्युपाधिर्महेशानः प्रार्थ्यतेऽभीष्टलब्धये ॥ १०४ ॥
जाते प्राणिशरीरे यो जाठराग्निस्वरूपतः ।
विद्यते तिष्ठतीत्येवं जातवेदाः स उच्यते ॥ १०५ ॥
उत्पन्नान्यजमानान्वा फलदानाय चेतसि ।
विनिश्चिनोति वेत्तीति जातवेदाः प्रकीर्तितः ॥ १०६ ॥
जातवेदः प्रकर्षेण दीप्यस्वानुग्रहाय मे ।
ममानिष्टं प्रकुर्वाणां निर्ऋतिं पापदेवताम् ॥ १०७ ॥
विनाशयन्विनाश्यैतां पशून्मह्यं गवादिकान् ।
जीवनं च चकाराभ्यां भोग्यजातमशेषतः ॥ १०८ ॥
संपादय निवासार्थं दिशः प्राच्यादिदिग्गतान् ।
निवासान् दिश देहीति मन्त्रार्थः परिकीर्तितः ॥ १०९ ॥

**मा नो हिꣳसीज्जातवेदो गामश्वं पुरुषं जगत् ।**
**अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥**

संपादितगवादीनां प्रार्थ्यतेऽत्राविनाशनम् ।
हे जातवेदो गामश्वं त्वत्प्रसादाद्गवादिकम् ॥ ११० ॥
मामकीनं च मा हिंसीन्मा नाशयतु निर्ऋतिः ।
जगच्छब्दाद्गवाद्यन्यगृहक्षेत्रादिकीर्तनम् ॥ १११ ॥
अग्नेऽस्मदपराधं त्वं मनस्यस्थापयन्प्रभो ।
आगच्छानुग्रहार्थं मे श्रिया मा परिपातय ॥ ११२ ॥
धनधान्यसमृद्ध्या मां सर्वतः प्रापयेश्वर ।

**पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि ।**
**तन्नो रुद्रः प्रचोदयात् ॥**

इतः परं तेषु तेषु देशेष्वतिविलक्षणः ॥ ११३ ॥
श्रुतिपाठस्तत्र पूर्वैर्द्राविडः पाठ आदृतः ।
तस्मात्तदनुसारेण श्रुतिव्याख्याधुनोच्यते ॥ ११४ ॥
गायत्रीषट्कतो देवाः प्रार्थ्यन्ते ज्ञानहेतवः ।
विश्वरूपधरो रुद्रः प्रार्थ्यते तत्र चादितः ॥ ११५ ॥
विश्वतश्चक्षुरित्युक्तः सहस्राक्षो विराट् पुमान् ।
तस्य स्वरूपं देवस्य जानीमहि लभेमहि ॥ ११६ ॥
तदर्थं तस्य देवस्य रूपं ध्यायेम धीमहि ।
तस्मिन् ध्याने विराड् रुद्रो नोऽस्मान् प्रेरयतु प्रभुः ॥ ११७ ॥

"बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः" इत्याद्यागमप्रसिद्धमूर्तिधरं महेशं प्रार्थयते—

**तत्पुरुषाय विद्महे महादेवाय धीमहि ।**
**तन्नो रुद्रः प्रचोदयात् ॥**

तमागमेषु प्रथितं पुरुषाकृतिमीश्वरम् ।
जानीमहि महादेवं ध्यायेम सततं वयम् ॥ ११८ ॥
प्रचोदयतु नो रुद्रस्तस्मिन् ध्याने निरन्तरम् ।

"बीजापूरगदेक्षुकार्मुक—" इत्याद्यागमप्रसिद्धमूर्तिधरं विनायकं प्रार्थयते—

**तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ।**
**तन्नो दन्तिः प्रचोदयात् ॥**

गजतुल्यमुखत्वेन दीर्घतुण्डस्य वक्रता ॥ ११९ ॥
यो रत्नकलशस्तस्य धारणायेति मन्यताम् ।
दन्तिर्महादन्तयुक्त इत्यर्थः परिकीर्तितः ॥ १२० ॥

पुराणादिप्रसिद्धं पक्षिराजमूर्तिधरं देवं प्रार्थयते—

**तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि ।**
**तन्नो गरुडः प्रचोदयात् ॥**

स्पष्टार्थत्वेन मन्त्रस्य न व्याख्या वार्त्तिकात्मिका ।

"हेमप्रख्यामिन्दुखण्डात्तमौलिम्" (प्रपञ्चसारः १४–२३) इत्याद्यागमप्रसिद्धमूर्तिधरां दुर्गां प्रार्थयते—

**कात्यायनाय विद्महे कन्यकुमारि धीमहि ।**
**तन्नो दुर्गिः प्रचोदयात् ॥**

कात्यः कृत्तिं वस्त इति श्रीरुद्रः परिकीर्तितः ॥ १२१ ॥
स एव यस्या अयनमधिष्ठानं तथोच्यते ।
कुमारी कुत्सितारिष्टमारिका परिकीर्तिता ॥ १२२ ॥
कन्या च कमनीयासौ कुमारी च तथोदिता ।
दुर्गिर्दुर्गैव लिङ्गादेर्व्यत्ययश्छान्दसो भवेत् ॥ १२३ ॥

"अर्कोद्दीप्यत्किरीटान्वितमकरलसत्कुण्डलम्" इत्याद्यागमप्रसिद्धमूर्तिधरं देवं प्रार्थयते—

**नारायणाय विद्महे वासुदेवाय धीमहि ।**
**तन्नो विष्णुः प्रचोदयात् ॥**

नारशब्दितमुख्यापो यस्य विष्णोः समाश्रयः ।
समुद्रजलसंवासी स नारायण उच्यते ॥ १२४ ॥

वसुदेवादभिव्यक्तः सोऽवतारविशेषतः ।
परमब्रह्मरूपेण व्यापित्वाद्विष्णुरुच्यते ॥ १२५ ॥
जप्या एताश्च गायत्र्यो देवताध्यानपूर्वकम् ।
अन्तःकरणशुद्ध्यर्थं सदा सूरिभिरादरात्[1] ॥ १२६ ॥

इति प्रथमोऽनुवाकः

**यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाꣳस्याविवेश । सताꣳ शिक्यः पुरोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरोम् ॥**

सर्ववेदान्तलाभाय जप्यो मन्त्र उदीर्यते ।
वेदानां प्रणवः श्रेष्ठो यः सर्वजगदात्मकः ॥ १२७ ॥
प्रादुर्भूतः स वेदेभ्यः प्रतिभातः प्रजापतेः ।
वेदसारतयेत्यर्थः प्रविवेश पुनश्च सः १२८ ॥
गायत्र्यादीनि मन्त्रेषु प्रयोज्यस्तद्युतेषु हि ।

मन्त्रेष्विति; छन्दोभिरुपलक्षितेषु प्रयोक्तव्यः । तदुक्तं प्रपञ्चसारे—
"अस्य तु वेदादित्वात् सर्वमनूनां प्रयुज्यते ह्यादौ" (१९–३५) इति ॥

सतां शिक्यः कर्मभिश्चोपासकैर्ज्ञानशालिभिः ॥ १२९ ॥
प्राप्तुं शक्यः कारणत्वाज्ज्येष्ठः प्रथम उच्यते ।
इन्द्रः प्रणववाच्यात्मा परमैश्वर्यसंयुतः ॥ १३० ॥
ऋषयोऽन्तर्मुखास्तेषां ज्ञानसामर्थ्यसिद्धये ।
ब्रह्मविद्यां जगौ तस्मात्प्रतिबन्धनिवृत्तये ॥ १३१ ॥
नमस्करोमि देवेभ्यः पितृभ्यश्चाहमादरात् ।

[1] इतः परं "सहस्रपरमा देवी" इत्यारभ्य पञ्चमानुवाकपर्यन्तं ग्रन्थकृता न विवृतम् ।

भूर्भुवः सुवरों वेदांस्त्रिलोकस्थानवाप्नुयाम् ॥ १३२ ॥
अत एव पठन्त्यन्ये छन्द ओमिति मानवाः ।

भूर्भुवः सुवश्छन्द ओमित्यर्थः ॥

इति षष्ठोऽनुवाकः

**नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओम् ॥**

अवाप्तवेदाविस्मृत्यै जप्यमन्त्र उदीर्यते ॥ १३३ ॥
नमोऽस्तु सर्वजगतां हेतवे परमात्मने ।
ग्रन्थस्य च तदर्थस्य धारणं मेऽस्तु चेतसि ॥ १३४ ॥
अनिराकरणं नामाविस्मृतिः सा यथा भवेत् ।
तथा धारयिताहं स्यां परमेष्ठिप्रसादतः ॥ १३५ ॥
एवं प्रार्थयमानस्य कर्णयोर्यच्छ्रुतं मम ।
अविनाशाय तत्सर्वं प्राप्नुयां स्थिरधारणम् ॥ १३६ ॥

इति सप्तमोऽनुवाकः

**ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दानं तपो यज्ञस्तपो भूर्भुवः सुवर्ब्रह्मैतदुपास्स्वैतत्तपः ॥**

ऐकाग्र्यलक्षणं यत्स्यात्तपो विज्ञानसाधनम् ।
तत्तपःप्राप्तये जप्यो मन्त्रोऽयमधुनोच्यते ॥ १३७ ॥
ऋतं वेदार्थबोधाय मीमांसाश्रवणं मतम् ।

मीमांसयोः श्रवणमित्यर्थः ।

इन्द्रियोपरतिः शान्तिः शान्तिशब्देन कीर्त्यते ॥ १३८ ॥

स्वत्वत्यागः परस्वत्वापत्त्यन्तो दानमुच्यते ।

आपत्तीति ; आपादनपर्यन्त इत्यर्थः ।

अग्निहोत्रादिको यज्ञस्तत्सर्वं तप उच्यते ॥ १३९ ॥
विराट्स्वरूपं यद्ब्रह्म भूरादित्रितयात्मकम् ।
मुमुक्षो त्वमुपास्स्वैतत्प्रत्ययावर्तनं कुरु ॥ १४० ॥
एतच्चोपासनं प्रोक्तमुत्तमं तप उच्यते ।

इत्यष्टमोऽनुवाकः

**यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्स्य कर्मणो दूराद्गन्धो वाति यथासिधारां कर्तेऽवहितामवक्रामेद्युवे युवे हुवे ह वा विह्वदिष्यामि कर्तं पतिष्यामीत्येवमनृतादात्मानं जुगुप्सेत् ।**

ज्ञानहेतुतया पुण्यं विहिताचरणात्मकम् ॥ १४१ ॥
प्रशस्यते निषिद्धस्याचरणं च विनिन्द्यते ।

ज्ञानप्रतिबन्धकत्वेनेति शेषः ।

यथैव सुरभिर्गन्धः सहागच्छति वायुना ॥ १४२ ॥
एवं पुण्यस्य यागादेः सुगन्धः कीर्तिलक्षणः ।
दूराद्वाति नृलोकाद्धि स्वर्गे गच्छत्यतो नृभिः ॥ १४३ ॥
पुण्यं कार्यमथाग्रे तु पापदृष्टान्त उच्यते ।
यथा प्रसारितां गर्ते कूपादौ कुत्रचिन्नरः ॥ १४४ ॥
खड्गधारामवक्रामेत्तदायं चिन्तयेन्नरः ।
युवे हुवे यौमि यौमि यद्यङ्घ्रिं मिश्रयाम्यहम् ॥ १४५ ॥
तद्धारायां तदाहं तु [1]विह्वलिष्याम्यसंशयम् ।

[1] मूले लस्य छान्दसो दकार इति सायणः ।

गर्ते वा संपतिष्यामि धारायां चरणस्य हि ॥ १४६ ॥
दृढस्पर्शेन विच्छेदाद्भविष्याम्येव विह्वलः ।
दृढस्पर्शो न चेद्गर्ते संपतिष्याम्यधस्त्विति ॥ १४७ ॥
एवं प्रवर्तमानोऽपि पापे मर्त्यो विचारयेत् ।
यदि तत्प्रकटं कुर्यां तदा स्यामिह निन्दितः ॥ १४८ ॥
यदि चाप्रकटं कुर्यां तदापि नरके खलु ।
पतिष्यामीति चात्मानं जुगुप्सेदनृतान्नरः ॥ १४९ ॥
धिङ् मां लोकद्वयभ्रष्टमित्यात्मानं विनिन्द्य च ।
पापान्निवारयेन्मर्त्य इति मन्त्रार्थ ईरितः ॥ १५० ॥

अवक्रामेत्; तदुपरि पादाभ्यां गन्तुं प्रवर्तेत इत्यर्थः ।

यच्छब्दो यदिशब्दार्थे यस्थाने व्यत्ययेन हः ।
अत एव पठन्त्यन्ये युवे युव इति श्रुतौ ॥ १५१ ॥
अहमर्थे हशब्दः स्याल्लस्थाने व्यत्ययेन दः ।

यद्युव इत्यादावाह—यच्छब्द इत्यादिना । अध इति; अधोवर्तिनि गर्ते त्वित्यन्वयः । इतीति; 'इति चिन्तयेन्नरः' इति पूर्वेणान्वयः । इति चात्मानमिति; ईदृग्विचारयुक्त इत्यर्थः ।

इति नवमोऽनुवाकः

अणोरणीयान्महतो महीया-
नात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम् ॥

पुण्यानुष्ठानतश्चास्य निषिद्धाचारवर्जनात् ॥ १५२ ॥
शुद्धान्तःकरणस्यैवं ब्रह्मतत्त्वं समीरितुम् ।
अणोरणीयानित्यादिरनुवाकः प्रवर्तते ॥ १५३ ॥
आत्मशब्दः स्वरूपार्थः परमेश्वरवाचकः ।
अधिष्ठानतया तस्य जगद्रूपत्वकारणात् ॥ १५४ ॥
परमाण्वादयोऽस्माकमयोग्याः स्युस्तथापि च ।
योगिप्रत्यक्षगम्यत्वं तेषां तच्चात्मनो न हि ॥ १५५ ॥
इत्यभिप्रेत्य भगवानणीयान्परिकीर्तितः ।
एकब्रह्माण्डमध्यस्थं दिगाकाशादिकं महत् ॥ १५६ ॥
ईदृग्ब्रह्माण्डकोटीनामधिष्ठानत्वमात्मनः ।
अतो महीयान्महतोऽप्ययमात्मा प्रकीर्तितः ॥ १५७ ॥
हृदब्जसंवृता बुद्धिस्तन्मध्यस्था गुहोच्यते ।
स्याद्धियोपलभ्यत्वं बुद्धौ निहितमात्मनः ॥ १५८ ॥
तमीशं निरुपाधित्वात्संकल्पेन विवर्जितम् ।
जीवस्यैव समीचीनमित्येतत्कल्पनं यतः ॥ १५९ ॥
अत एव महान्तं च शमादिगुणसंयुतः ।
धातुः प्रसादादीशस्यानुग्रहादधिकारवान् ॥ १६० ॥
साक्षात्करोति दृष्ट्वा तं वीतशोको भवेन्नरः ।

ातुरिति । तदुक्तम्—

"ईश्वरानुग्रहादेषां पुंसामद्वैतवासना ।
महाभयपरित्राणा द्वित्राणामिह जायते ॥"

इति ।

**सप्त प्राणाः प्रभवन्ति तस्मात्**
**सप्तार्चिषः समिधः सप्त जिह्वाः ।**
**सप्त इमे लोका येषु चरन्ति**
**प्राणा गुहाशयान्निहिताः सप्त सप्त ॥**

विशुद्धचित्तैर्विज्ञेयः परमात्मा य ईरितः ॥ १६१ ॥
तस्योपलक्षणार्थं च जगत्कारणतोच्यते ।

तस्येति; शाखेन्दुन्यायेनेत्यर्थः ।

शिरःस्थसप्तच्छिद्रस्थाः सप्तसंख्यासमन्विताः ॥ १६२ ॥
प्राणा मायायुतादीशाज्जायन्ते चक्षुरादयः ।
चक्षुषी नासिके श्रोत्रे वाक् चेति प्राणसप्तकम् ॥ १६३ ॥
सप्तार्चिषः सप्तसंख्या वृत्तयः परिकीर्तिताः ।
तैर्गृह्यमाणविषयाः समिधः सप्त कीर्तिताः ॥ १६४ ॥
यथा गोलकभेदेन चक्षुरादि द्विधा भवेत् ।
तथा ग्राहकभेदेन रूपादिद्वित्वमुच्यते ॥ १६५ ॥

तैः; अर्चिर्भिरित्यर्थः ।

अथवा सप्तसंख्यायाः समिच्छब्देन नान्वयः ।
किंतु जिह्वापदेनैव वह्नेर्जिह्वास्त्विमाः श्रुताः ॥ १६६ ॥

"काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लोलायमाना इति सप्त जिह्वाः ॥"

(मु. १-४)

मुण्डकश्रुतिमेव पठति—कालीति ।

प्राणाश्चरन्ति देवादेर्देहस्था येषु सप्तसु ।
इमे भूरादयः सप्त लोकास्तस्मात्समुत्थिताः ॥ १६७ ॥
गुहाशयः स विज्ञेयो यो बुद्धावुपलभ्यते ।
तस्मादेव समुत्पन्नाः सप्तसंख्यासमन्विताः ॥ १६८ ॥
सप्तर्षयस्तथा सप्त समुद्रा एवमादिकाः ।
पदार्था निहितास्तत्र तत्र च स्थापिताः स्थले ॥ १६९ ॥

**अतः समुद्रा गिरयश्च सर्वे-**
**ऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।**
**अतश्च विश्वा ओषधयो रसाश्च**
**येनैष भूतस्तिष्ठत्यन्तरात्मा ॥**

समुद्रा गिरयश्चास्मात्प्रभवन्ति महेश्वरात् ।
अस्माद्गङ्गादयो नद्यः संजाताः प्रवहन्ति च ॥ १७० ॥
व्रीह्याद्योषधयोऽम्लाद्या रसाश्चेशात्समुत्थिताः ।
अन्तरात्मपदेनात्र लिङ्गदेहो विवक्षितः ॥ १७१ ॥
स्थूलदेहचिदात्मान्तर्मध्ये ह्येषोऽवतिष्ठते ।
येनौषधिरसेनायं बद्धे देहेऽत्र तिष्ठति ॥ १७२ ॥
तादृशो रस उत्पन्न इत्यर्थः परिकीर्तितः ।

**ब्रह्मा देवानां पदवीः कवीना-**
**मृषिर्विप्राणां महिषो मृगाणाम् ।**
**श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ**
**सोमः पवित्रमत्येति रेभन् ॥**

ईशस्योत्कृष्टरूपेणावस्थानमिह कथ्यते ॥ १७३ ॥

इन्द्रादिकानां देवानां मध्ये ब्रह्मा चतुर्मुखः ।
भूत्वा नियामकत्वेन परमेशोऽवतिष्ठते ॥ १७४ ॥
कवीनां काव्यशास्त्रादेः कर्तॄणां पदवीरयम् ।
पदं सुशब्दं वेतीति शब्दसामर्थ्यबोधवान् ॥ १७५ ॥
व्यासवाल्मीकिमुख्यो यस्तद्रुपश्चावतिष्ठते ।
ऋषिर्वसिष्ठप्रमुखस्तत्तद्गोत्रप्रवर्तकः ॥ १७६ ॥
चतुष्पदां तु महिषः शक्त्याधिक्येन संयुतः ।
बभूव प्रबलः श्येनः सर्वेषां पक्षिणामपि ॥ १७७ ॥
वृक्षौघानां छेदनार्थं परशुश्च बभूव सः ।
सोमवल्ल्यात्मको रेभन्पवित्रं शुद्धिकारणम् ॥ १७८ ॥
मन्त्रशब्देन युक्तः सन्नत्येत्यखिलमेव सः ।

**अजामेकां लोहितशुक्लकृष्णां**
**बह्वीं प्रजां जनयन्तीᳪं सरूपाम् ।**
**अजो ह्येको जुषमाणोऽनुशेते**
**जहात्येनां भुक्तभोगामजोऽन्यः ॥**

चतुर्मुखादिदेहेषु विशेषेण स्थितिं विभोः ॥ १७९ ॥
व्यवहारस्य समये संकीर्त्याथ प्रदर्श्यते ।
अविद्यामुपजीव्यात्र बद्धमुक्तव्यवस्थितिः ॥ १८० ॥
तेजोऽबन्नानि संपाद्य तद्रूपाजा यदा तदा ।
लोहितादिकवर्णा स्याद्यदग्नेरिति हि श्रुतिः ॥ १८१ ॥

तेज इति ; अजा तेजआदीनि संपाद्य तद्रूपा यदा स्यात्तदेत्यन्वयः । "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" (छान्दोग्ये ६-४-१.) इति श्रुतेरित्यर्थः ।

लोहितादिकशब्दैर्वा रजःसत्त्वतमोगुणाः ।
उपलक्ष्यास्तथाचेयं स्याद्गुणत्रितयात्मिका ॥ १८२ ॥
गुणत्रयात्मकत्वेन सरूपा या प्रजा भवेत् ।
तां समुत्पादयत्येका तामजो जनिवर्जितः ॥ १८३ ॥
जीवः सक्तो विरक्तश्च तत्रैकः सक्तिमानजः ।
प्रीत्या संसेवमानः सन्ननुशेते विमूढधीः ॥ १८४ ॥
यथोक्तामनुसृत्यैव वर्तते याति संसृतिम् ।
अन्यो विरक्तजीवस्तु भुक्तभोगां जहाति ताम् ॥ १८५ ॥
प्रागेव भुक्ता भोगा ये नोपरिष्टात्तथाविधैः ।
भोगैर्युक्तां भुक्तभोगां तत्त्वज्ञानेन बाधते ॥ १८६ ॥
संघातमानी बद्धः स्यात्तद्विहीनो विमुच्यते ।

व्यवस्थां व्यक्तीकरोति—संघातेति ।

**हꣳसः शुचिषद्वसुरन्तरिक्षस-**
**द्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा**
**गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥**

ज्ञानबाधितमायस्य भाति ब्रह्मात्मना जगत् ॥ १८७ ॥
इति प्रदर्श्यतेऽर्थोऽयमतो जगदनूद्यते ।
सर्वदा गच्छतीत्यर्को हंसोऽयं शुद्धमण्डले ॥ १८८ ॥
ज्योतिर्मये सीदतीति शुचिषत्परिकीर्तितः ।
जगन्निवासहेतुत्वाद्वसुः सूत्रात्मरूपतः ॥ १८९ ॥
वायुः सन्नन्तरिक्षेऽयं सीदतीत्यन्तरिक्षसत् ।
होताग्निर्होमजनकस्तद्रूपो वेदिसंस्थितः ॥ १९० ॥

सीदत्यतिथिरूपेण दुरोणेषु गृहेष्वयम् ।
कर्माधिकारिजीवः सन् नृषु मर्त्येषु संस्थितः ॥ १९१ ॥
वरसच्छ्रेष्ठकाश्यादौ पूज्यदेवात्मना स्थितः ।
ऋतसत्फलरूपेण वैदिके कर्मणि स्थितः ॥ १९२ ॥
नक्षत्रादिकरूपेण व्योमस्थो व्योमसद्भवेत् ।
अब्जो जलेभ्यः संजातः शङ्खनक्रादिरूपतः ॥ १९३ ॥
गोजाः क्षीरादिरूपेण गोभ्यः संजात उच्यते ।
ऋतजाः सत्यवचनाज्जातः कीर्तिस्वरूपतः ॥ १९४ ॥
वृक्षादिरूपतोऽद्रिभ्यो जात इत्यद्रिजाः स्मृतः ।
ऋतं सत्यं परं ब्रह्म हंस इत्यादिनोदितम् ॥ १९५ ॥
यज्जगत्तत्समस्तं च ब्रह्मैव ज्ञानिदृष्टितः ।

**यमाज्जाता न परा नैव किंच-**
**नास य आविवेश भुवनानि विश्वा ।**
**प्रजापतिः प्रजया संविदान-**
**स्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥**

जगदात्मत्वमुक्तं यत्तदत्र प्रतिपाद्यते ॥ १९६ ॥
सृष्टेरूर्ध्वं समुत्पन्नाः प्रजा यस्मान्महेश्वरात् ।
परा न व्यतिरिक्ताः स्युर्नापि तत्पूर्वभाविनः ॥ १९७ ॥

सृष्टेः पूर्ववर्तिप्रजा नेश्वरादन्या इत्यर्थः ।

सृष्टेः पूर्वं ब्रह्मभिन्नं वस्तु नैवास किंचन ।
श्रुत्यन्तरे ह्येकमेवाद्वितीयं ब्रह्म संश्रुतम् ॥ १९८ ॥
नापि चेतनजीवस्य ब्रह्मान्यत्वमुपेयते ।

य ईशः सर्वलोकस्थान् देहाञ्जीवात्मनाविशत् ॥ १९९ ॥
अनेन जीवेनेत्यादिश्रुतिसंकीर्तितत्वतः ।
प्रजापालक ईशोऽयं प्रजयोत्पन्नयात्मनः ॥ २०० ॥
तादात्म्यं लभमानः सन् वर्तते किंच सोऽच्युतः ।
त्रीणि ज्योतींषि सचते समवैति तदात्मकः ॥ २०१ ॥
अग्न्यर्कचन्द्ररूपाणि ज्योतींषीत्यर्थ ईरितः ।
प्रश्नोपनिषदुक्ता याः कलाः षोडश तद्युतः ॥ २०२ ॥
तत्कलारूपजगता तादात्म्यात्षोडशी शिवः ।

**विधर्तार१ँ हवामहे वसोः कुविद्वनाति नः ।**
**सवितारं नृचक्षसम् ॥**

मन्त्राः केचिदिहोच्यन्ते सर्वेशप्रार्थनात्मकाः ॥ २०३ ॥
ब्रह्मविज्ञानलाभाय वेदेन हितकारिणा ।
वसोर्ज्ञानस्य दातारं विधर्तारं विशेषतः ॥ २०४ ॥

विशेषतो दातारमित्यन्वयः ।

अस्मद्बुद्धेः प्रेरकत्वात्सवितारं नृचक्षसम् ।
तत्त्वविद्याप्रवक्तारं नृणामाचार्यरूपतः ॥ २०५ ॥
अस्मत्प्रसादसिद्ध्यर्थमाह्वयामो महेश्वरम् ।
कुवित्प्रभूतं ज्ञानाख्यं धनमीशो ददाति नः ॥ २०६ ॥

**अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।**
**परा दुष्वप्नियँ सुव ॥**

हे देव प्रेरकाद्यास्मिन् दिने विद्याभिलाषिणाम् ।
नः शिष्यादिप्रजोपेतं भाग्यमाचार्यतात्मकम् ॥ २०७ ॥

सावीः प्रयच्छ द्वैतं च स्वप्नतुल्यं पराकुरु ।

**विश्वानि देव सवितर्दुरितानि परासुव ।**
**यद्भद्रं तन्म आसुव ॥**

सर्वाण्यघानि ज्ञानस्य प्रतिबन्धान् विनाशय ॥ २०८ ॥
असंभावनया हीनं विपर्ययविवर्जितम् ।
यदस्ति तत्त्वविज्ञानं तत्साकल्येन देहि मे ॥ २०९ ॥

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।**
**माध्वीर्नः सन्त्वोषधीः ॥**

ऋतं ब्रह्मेच्छते मह्यं वाता वान्तु सुखावहाः ।
स्याद्वायौ प्रबले रोगो विघ्नस्तत्त्वधियो यतः ॥ २१० ॥
अतो वायोरानुकूल्यं प्रार्थ्यते ज्ञानकामिना ।
नद्यः संपादयन्त्वम्बु मधुरं रोगनाशकम् ॥ २११ ॥
व्रीह्याद्या मधुराः सन्तु पथ्यरूपा भवन्तु नः ।

**मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः ।**
**मधु द्यौरस्तु नः पिता ॥**

रात्रौ दिवा च नोऽस्माकं सुखमस्त्वनुकूलतः ॥ २१२ ॥
मा भूत्कालकृतो विघ्नो ज्ञानस्येत्यर्थ ईरितः ।

अनुकूलत इति ; सार्वविभक्तिकस्तसिः । अनुकूलमित्यर्थः ।

पार्थिवं शयनादिस्थं रजो मधुमदस्तु नः ॥ २१३ ॥
अनुकूलं तदप्यस्तु कण्टकादिविवर्जितम् ।
द्यौः पिता पृथिवी मातेत्येवं श्रुत्या पिता हि सा ॥ ११४ ॥

**मधुमान्नो वनस्पतिर्मधुमाँ२ अस्तु सूर्यः ।**
**माध्वीर्गावो भवन्तु नः ॥**

चूतादिर्मधुमानस्तु मधुरैरन्वितः फलैः ।
अस्त्वेष जीवनोपायो नोऽस्मान् प्रति महीरुहः ॥ २१५ ॥
अकृत्वाधिकसंतापमनुकूलप्रकाशयुक् ।
सूर्योऽस्तु गावो माध्वीर्नो मधुरक्षीरसंयुताः ॥ २१६ ॥

**घृतं मिमिक्षे घृतमस्य योनि-**
**र्घृते श्रितो घृतम्वस्य धाम ।**
**अनुष्वधमावह मादयस्व**
**स्वाहाकृतं वृषभ वक्षि हव्यम् ॥**

देहानुकूल्यं संप्रार्थ्य भोगस्य सकलस्य च ।
ज्ञानहेतुक्रियाहेतोरग्नेस्तत्प्रार्थ्यतेऽत्र तु ॥ २१७ ॥

तत्; आनुकूल्यम् ।

घृतमग्नौ सिक्तवन्तो यजमानाः पुरातनाः ।
हेतुर्वह्नेर्घृतं तेन ज्वालानामभिवृद्धितः ॥ २१८ ॥
अतो घृते श्रितो वह्निर्घृतमेवास्य धाम च ।
अनुसृत्य स्वधामन्नमस्मदीयं हविर्वह ॥ २१९ ॥
देवानत्रानयानीय मादयस्व मुदान्वितान् ।
कुरु हे वृषभश्रेष्ठ हव्यं स्वाहाकृतं वह ॥ २२० ॥
स्वाहाकारेण चास्माभिर्दत्तं प्रापय देवताः ।

हविर्वहेति; आवहेति यावत् । तस्यैवार्थो देवानत्रानयेति ।

**समुद्रादूर्मिर्मधुमाँ उदार-**
**दुपांशुना सममृतत्वमानट् ।**
**घृतस्य नाम गुह्यं यदस्ति**
**जिह्वा देवानाममृतस्य नाभिः ॥**

समुद्रवत्समधिकात्परिपूर्णपरात्मनः ॥ २२१ ॥
ऊर्मितुल्यप्रपञ्चोऽयं मधुमान् भोग्य उत्थितः ।
अब्धेस्तरङ्गवत्सर्वं भोग्यमीशादजायत ॥ २२२ ॥
घृतं दीप्तं स्वप्रकाशं तस्य प्रणवलक्षणम् ।
नाम सर्वेषु वेदेषु यद्गोप्यं विद्यते महत् ॥ २२३ ॥

घृतमिति ; " घृ क्षरणदीप्त्योः " इति धातुः ।

तेन प्रणवरूपेणोपांशुना ध्यानकालतः ।
शनैरुच्चार्यमाणेनामृतत्वं नाशवर्जितम् ॥ २२४ ॥
ब्रह्मानट् सम्यगाप्नोति तच्च जिह्वा दिवौकसाम् ।
तैर्ध्यानतत्परैर्नित्यं कीर्त्यत्वादास्यमध्यतः ॥ २२५ ॥
वर्तते किंच मोक्षस्य नाभिराश्रय उच्यते ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ २२६ ॥
इति श्रुत्यन्तरोक्तत्वादनेनाप्यं हि तत्फलम् ।
एतस्यामृचि तारस्य मोक्षसाधनतोदिता ॥ २२७ ॥

**वयं नाम प्रब्रवामा घृतेना-**
**स्मिन्यज्ञे धारयामा नमोभिः ।**
**उप ब्रह्मा शृणवच्छस्यमानं**
**चतुःशृङ्गोऽवमीद्गौर एतत् ॥**

अस्मिन् यज्ञे ज्ञानयज्ञे वयं ज्ञानाभिलाषिणः ।
ब्रह्मात्मना निमित्तेन नाम प्रणवसंज्ञकम् ॥ २२८ ॥
प्रब्रवामोच्चारयामो ध्यायन्तः सर्वदा ततः ।
नमस्कारैर्युताश्चित्ते धारयामो महेश्वरम् ॥ २२९ ॥
शस्यमानं स्तूयमानमस्माभिः प्रणवेन च ।
ब्रह्मैतच्छ्रूयमाणं च पार्श्वस्थैर्ब्रह्मवेदिभिः ॥ २३० ॥
अकारादिकनादान्तचतुःशृङ्गसमन्वितः ।
प्रणवाख्यो वृषः श्रोतो वान्तवान्प्रत्यपादयत् ॥ २३१ ॥

**चत्वारि शृङ्गा त्रयो अस्य पादा**
**द्वे शीर्षे सप्त हस्तासो अस्य ।**
**त्रिधा बद्धो वृषभो रोरवीति**
**महो देवो मर्त्या॑ आविवेश ॥**

प्रणवप्रतिपाद्यत्वादस्य प्रणवरूपिणः ।
अकारादीनि चत्वारि शृङ्गाणि परमात्मनः ॥ २३२ ॥
ब्रह्मैभिर्गम्यते तत्त्वमिति पादाः समीरिताः ।
विश्वश्च तैजसः प्राज्ञ इत्यध्यात्मं त्रयोऽङ्घ्रयः ॥ २३३ ॥
विराड्ढिरण्यगर्भश्चाव्याकृतश्चाधिदैवतम् ।
द्वे शक्ती चिदचिद्रूपे शिरःस्थाने समीरिते ॥ २३४ ॥
भूरादयः सप्त लोकाः हस्ताः स्युः परमात्मनः ।
विश्वादिभिर्विराडाद्यैस्त्रिधाकारादिषु त्रिषु ॥ २३५ ॥
संबद्धः प्रणवो ब्रह्म प्रतिपादयति स्फुटम् ।
स्पष्टं प्रणववेद्यं तद्देव इत्यादिनोच्यते ॥ २३६ ॥
प्रविष्टः सर्वतो मर्त्यान्नरदेहान्महेश्वरः ।

नखाग्रावधिदेहेऽयं संप्रविष्ट इति श्रुतिः ॥ २३७ ॥

**त्रिधा हितं पणिभिर्गुह्यमानं**
**गवि देवासो घृतमन्वविन्दन् ।**
**इन्द्र एकꣳ सूर्य एकं जजान**
**वेनादेकꣳ स्वधया निष्टतक्षुः ॥**

देहे विश्वादिसंज्ञेन त्रिप्रकारेण संस्थितम् ।
विराडादिकसंज्ञेन ब्रह्माण्डे च त्रिधा स्थितम् ॥ २३८ ॥
गोप्यमानं रहस्यत्वादाचार्यैर्ब्रह्म भास्वरम् ।
लब्धवन्तो महावाक्ये देववत्सात्त्विका नराः ॥ २३९ ॥
यत् त्रिधा हितमित्युक्तमेतदेव विविच्यते ।
समुत्पादितवानेकं विराड् जागरणात्मकम् ॥ २४० ॥
हिरण्यगर्भोऽजनयत्स्वप्नरूपं प्रभाववान् ।
सुषुप्तरूपं संजातं वेनादव्याकृतात्मनः ॥ २४१ ॥
वेनेति कान्तिकर्मा स्यात्सर्वदुःखविवर्जनात् ।
कमनीयोऽव्याकृतः स्यादित्येवमवगम्यताम् ॥ २४२ ॥

वेनेति ; धातुरिति शेषः ।

धीयते स्थाप्यते स्वस्मिन्निति ब्रह्मात्मिका चितिः ।
आश्रयान्तरहीनेयं स्वधाशब्देन कीर्त्यते ॥ २४३ ॥
तयोत्पादितवन्तस्ते त्रयो जागरणादिकम् ।

**यो देवानां प्रथमं पुरस्ता-**
**द्विश्वाधिको रुद्रो महर्षिः ।**
**हिरण्यगर्भं पश्यत जायमानꣳ**
**स नो देवः शुभया स्मृत्या संयुनक्तु ॥**

द्रवत्येति रुदं शब्दं वैदिकं रुद्र उच्यते ॥ २४४ ॥
वेदगम्यो महाञ्श्रेष्ठोऽतीन्द्रियो द्रष्टुमध्यतः ।
हिरण्यगर्भं यो देवः पश्यति स्वप्रकाशचित् ॥ २४५ ॥
आदिभूतं समस्तानामिन्द्रादीनां दिवौकसाम् ।
पुरस्ताज्जन्मनां कीर्त्या देवानां जन्मतः पुरा ॥ २४६ ॥
पुरस्ताज्जन्मसंकीर्त्या तत्प्राथम्यं स्फुटीकृतम् ।
स देवः शुभया स्मृत्या सर्वसंसारघातिना ॥ २४७ ॥
ब्रह्मस्मृत्या संयुनक्तु संयुक्तान् प्रकरोतु नः ।
मन्त्रोऽयं ब्रह्मविद्यायाः प्राप्तये जप्यतां बुधैः ॥ २४८ ॥
इति प्रतीयतेऽस्माकं मन्त्रलिङ्गस्य तत्त्वतः ।

**यस्मात्परं नापरमस्ति किंचि-**
**द्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।**
**वृक्ष इव स्तब्धो दिवि तिष्ठ-**
**त्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥**

यदुक्तं शुभयेत्यादि स्मर्तव्यं तदिहोच्यते ॥ २४९ ॥
उत्कृष्टमपकृष्टं वा वस्तु यस्मान्न विद्यते ।
नाल्पं यस्माद्ब्रह्मणोऽस्ति नाधिकं वस्तु किंचन ॥ २५० ॥
गुणोत्कर्षापकर्षौ तु परापरपरोदितौ ।
मानोत्कर्षादिकं प्रोक्तं ज्यायइत्यादिशब्दतः ॥ २५१ ॥
सर्वथा तन्निषेधेनाद्वितीयत्वं हि सिध्यति ।

उत्कर्षापकर्षनिषेधेनेत्यर्थः ।

वृक्षः स्तब्धो यथैकत्र गत्यादिरहितस्तथा ॥ २५२ ॥

स्वप्रकाशस्वरूपोऽसौ निर्विकारोऽवतिष्ठते ।
तेनेदं पूर्णमखिलं पुरुषेण परात्मना ॥ २५३ ॥
नास्त्येव जगदाकारो परमात्मैव संस्थितः ।

**न कर्मणा न प्रजया धनेन**
**त्यागेनैके अमृतत्वमानशुः ।**
**परेण नाकं निहितं गुहायां**
**विभ्राजते यद्यतयो विशन्ति ॥**

ब्रह्मस्मृतावन्तरङ्गं त्यागो हेतुरिहोच्यते ॥ २५४ ॥
तच्चामृतत्त्वं न प्राप्यमग्निहोत्रादिकर्मणा ।
पुत्रादिना धनेनापि किंतु कर्मादिहानतः ॥ २५५ ॥
व्यापाराणां लौकिकानां वैदिकानां च वर्जनात् ।
केचिदन्तर्मुखा एवामृतत्वं प्राप्नुवन्ति तत् ॥ २५६ ॥
जितेन्द्रिया यद्विशन्ति तत्स्वर्गादुत्तमं च सत् ।
एकाग्रबुद्धिनिष्ठं सद्विशेषेण प्रकाशते ॥ २५७ ॥
अन्तर्मुखैः सद्भिरेव ब्रह्म तच्चानुभूयते ।

**वेदान्तविज्ञानसुनिश्चितार्थाः**
**संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।**
**ते ब्रह्मलोके तु परान्तकाले**
**परामृताः परिमुच्यन्ति सर्वे ॥**

**दह्रं विपाप्मं परमेश्मभूतं**
**यत्पुण्डरीकं पुरमध्यसंस्थम् ।**
**तत्रापि दह्रं गगनं विशोक-**
**स्तस्मिन्यदन्तस्तदुपासितव्यम् ॥**

**यो वेदादौ स्वरः प्रोक्तो**
**वेदान्ते च प्रकृतिष्ठितः ।**
**तस्य प्रकृतिलीनस्य**
**यः परः स महेश्वरः ॥**

त्यागस्य मोक्षहेतुत्वं पूर्वस्यामृचि कीर्तितम् ॥ २५८ ॥
ज्ञानस्य तरतीत्यादौ श्रुतौ तद्बहुशः श्रुतम् ।
अतस्तयोः पृथङ् मुक्तावुपयोगोऽत्र वर्ण्यते ॥ २५९ ॥
विरोधपरिहाराय तयोः श्रुत्योर्यथोक्तयोः ।
वेदान्तवाक्यजज्ञाननिश्चितात्मैक्यशालिनः ॥ २६० ॥
संन्यासपूर्वको योगः सर्ववृत्तिविनिग्रहः ।
तस्माद्विशुद्धसत्त्वाश्च भोगव्यावृत्तचेतसः ॥ २६१ ॥
अतो नियमनासक्ता यतयः परिकीर्तिताः ।
ज्ञानं तत्त्वस्य संस्फूर्त्याविद्याया विनिवर्तकम् ॥ २६२ ॥
त्यागो निवर्तयेद्भोगं चित्तशुद्धेस्तु कारणम् ।
इति मुक्तौ तयोरुक्ता पृथगेवोपयोगिता ॥ २६३ ॥
ब्रह्मसंदर्शने जाते ते संसारविलक्षणाः ।
वैलक्षण्यद्योतनार्थस्तुशब्दः परिकीर्तितः ॥ २६४ ॥
अज्ञाननाशे देहस्य पतनावसरः स्मृतः ।
परान्तकालो भूयश्च देहग्रहणवर्तनात् ॥ २६५ ॥
तस्मिन् सर्वे विमुच्यन्ते देवा वा मानुषास्तथा ।
उत्तमाधमभावस्तु भवेदत्राप्रयोजकः ॥ २६६ ॥
जगद्धेतुतयोत्कृष्टममृतं नाशवर्जितम् ।
तत्त्वज्ञानं विना लब्ध्वाव्याकृतं परिकीर्तिम् ॥ २६७ ॥

अव्याकृताद्विमुच्यन्ते ज्ञानिनो देहपाततः ।

तत्काल एवेत्यर्थः ।

अज्ञानिनस्तु प्रलये देहबन्धे गतेऽपि च ॥ २६८ ॥

अज्ञानान्न हि मुच्यन्ते मुच्यन्ते ज्ञानिनस्तदा ।

दहं विपाप्ममित्याद्या व्याख्याताः पद्यरूपतः ॥ २६९ ॥

न्यायरत्नावलीग्रन्थ इति चात्रोपरम्यते ।

इति दशमोऽनुवाकः[1]

**आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलꣳ स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन् मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषा मण्डलꣳ स यजुषां लोकः सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः ।**

रविबिम्बे परेशस्योपासनं कथ्यतेऽधुना ॥ २७० ॥

पूर्वानुवाकाभिहितो यो नारायणशब्दितः ।

स एष रविरूपेण वर्तते परमेश्वरः ॥ २७१ ॥

दृश्यमानं रवेरेतद्वर्तुलाकारमण्डलम् ।

तेजःपुञ्जं तपत्युष्णं तत्र तस्मिंश्च मण्डले ॥ २७२ ॥

ताः प्रसिद्धा ऋचः सन्ति तत्तस्मात्कारणादृचः ।

निष्पादितं मण्डलं स्यादृचस्तन्मानिदेवताः ॥ २७३ ॥

तासां स बिम्बभागोऽयं निवासः परिकीर्तितः ।

ऋगात्मकत्वं बिम्बस्य ध्यात्वाथ तदनन्तरम् ॥ २७४ ॥

यदेतन्मण्डले तेजो भास्वरं संप्रकाशते ।

[1] इतः परमेकादशद्वादशानुवाकौ न विवृतौ ।

तानि तेजःस्वरूपाणि सामानीति विचिन्तयेत् ॥ २७५ ॥
सोऽर्चिर्भागो निवासः स्यात्साम्नां तदभिमानिनाम् ।
सामध्यानानन्तरं च चिन्तयेद्यजुरात्मकम् ॥ २७६ ॥
शास्त्रप्रसिद्धो देवात्मा मण्डलेऽर्चिषि वर्तते ।
तानि देवस्वरूपाणि यजूंषीति विचिन्तयेत् ॥ २७७ ॥
यजुरात्मा स च पुमान्यजुषा कृतमण्डलम् ।
इति ध्यायेद्यजुर्भागः स यजुर्देवतालयः ॥ २७८ ॥
यन्मण्डलं यदर्चिश्च तत्रत्यपुरुषश्च यः ।
एतत्त्रितयरूपैषा विद्या त्रय्येव भासते ॥ २७९ ॥

ऋग्यजुःसामात्मिकैवेत्यर्थः ।

अत्रोक्तो यः पुमानेष रविमण्डलमध्यगः ।
हिरण्मयोऽस्ति तत्त्वं च प्रसिद्धमितरत्र हि ॥ २८० ॥

हिरण्मयत्वं च शाखान्तरे प्रसिद्धमित्यर्थः । "अथ य एषोऽन्तरादित्यो हिरण्मयः पुरुषो दृश्यते" इति श्रुतेः (छन्दोग्ये १-६-६) ।

इति त्रयोदशोऽनुवाकः

**आदित्यो वै तेज ओजो बलं यशश्चक्षुः श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तथ्सत्यमन्नमायुरमृतो जीवो विश्वः कतमः स्वयंभुः प्रजापतिः संवथ्सर इति संवथ्सरोऽसावादित्यो य एष पुरुष एष भूतानामधिपतिर्ब्रह्मणः सायुज्य॰ सलोकतामाप्नोत्येतासामेव देवताना॰ सायुज्य॰ सार्ष्टिता॰ समानलोकतामाप्नोति य एवं वेदेत्युपनिषत् ।**

सर्वात्मकत्वरूपं च प्राहोपास्यगुणं रवेः ।

उपास्यत्वेन यः प्रोक्तः पूर्वमर्कः स एव च ॥ २८१ ॥
तेजआद्यधिपत्यन्तसमस्तजगदात्मकः ।
बलहेतुर्भवेदोजो देहशक्तिर्बलं स्मृतम् ॥ २८२ ॥
आत्मा देहो मनश्चित्तं मन्युः क्रोधः समीरितः ।
मनुः स्वायंभुवादिः स्यान्मृत्युर्यम उदीरितः ॥ २८३ ॥
स्युर्देवताविशेषास्तु सत्याद्यास्ते च संस्फुटाः ।
कः प्रजापतिरित्युक्तः किंशब्देन तदुच्यते ॥ २८४ ॥
वाचा विशेषतो वक्तुमयोग्यं वस्तु यद्भवेत् ।
कं सुखं तत्परोक्षं स्यात्सत्यं त्वनृतवर्जनम् ॥ २८५ ॥
अन्नं व्रीह्यादिरायुस्तु शतसंवत्सरादिकम् ।
अमृतो मृतिहीनः स्याच्चिदात्मा जीव उच्यते ॥ २८६ ॥
स च देहविभेदेन विश्वो नानाविधः स्मृतः ।
अतीव सुखरूपोऽयं कतमः परिकीर्तितः ॥ २८७ ॥
अनुत्पन्नः स्वयंभुः स्याच्छान्दसं तु स्वयं त्विति ।
प्रजापालकराजादिः प्रजापतिरितीरितः ॥ २८८ ॥
इतिः प्रदर्शनार्थः स्यादित्यादिसकलस्य च ।
आदित्यजत्वादादित्यः संवत्सर उदीरितः ॥ २८९ ॥
य एष पुरुषः सर्वः स एव प्राणिनामपि ।
भवत्यधिपतिः स्वामीत्येवं मन्त्रार्थ ईरितः ॥ २९० ॥

सर्वः सर्वात्मक इत्यर्थः ।

उक्त्वोपास्यगुणानेवं फलमत्र प्रदर्श्यते ।
उपास्ते यः पुमानेवं स सायुज्याद्यवाप्नुयात् ॥ २९१ ॥

हिरण्यगर्भोपास्तिश्च तदङ्गानामुपासनम् ।
इत्युपास्तिर्द्विधाद्ये च भावनातिशये सति ॥ २९२ ॥
हिरण्यगर्भसायुज्यं ताद्रूप्यं प्रतिपद्यते ।
भावनामन्दतायां च तत्सालोक्यं समश्नुते ॥ २९३ ॥
द्वितीये भावनाधिक्ये देवसायुज्यमश्नुते ।
भावनामध्यतायां च समानैश्वर्यमश्नुते ॥ २९४ ॥
तन्मान्द्ये च सलोकत्वमिन्द्रादीनां प्रपद्यते ।
एवं रहस्यविद्योक्ता समाप्तिमगमच्छुभा ॥ २९५ ॥

इति चतुर्दशोऽनुवाकः

**घृणिः सूर्य आदित्योमर्चयन्ति तपः सत्यं मधु क्षरन्ति तद्ब्रह्म तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् ।**

घृणिर्दीप्तियुतः सूर्यः सूर्य इत्यभिधानवान् ।
आदित्य अदितेः पुत्रः सोऽहमस्मि तथाविधम् ॥ २९६ ॥

ओमित्यस्यार्थमाह—सोऽहमिति । तथाविधमादित्यमित्यन्वयः ।

आदित्यं पुरुषाः सर्वेऽप्यर्चयन्ति फलार्थिनः ।
तमादित्यं समुद्दिश्य तपः कुर्वन्ति साधवः ॥ २९७ ॥
समर्पयन्ति नैवेद्यं मधुक्षीरादिकं बुधाः ।
तदादित्यात्मकं वस्तु वेदो वा ब्रह्म वा परम् ॥ २९८ ॥

परं ब्रह्मेत्यन्वयः ।

आदित्यरूपं तच्चापो वृष्टिनिष्पादकत्वतः ।
याः समुद्रादिगा आपो यज्ज्योतिर्दहनादिकम् ॥ २९९ ॥
मधुरादिरसो यश्च यत्सुधासंज्ञकामृतम् ।

यद्ब्रह्ममन्त्रजातं च ये च भूरादयस्त्रयः ॥ ३०० ॥

लोका इति शेषः ।

आदित्यरूपं तत्सर्वमोमित्यर्थः प्रकीर्तितः ।

इति पञ्चदशोऽनुवाकः

**सर्वो वै रुद्रस्तस्मै रुद्राय नमोऽस्तु ।**
**पुरुषो वै रुद्रस्तन्महो नमो नमः ॥**
**विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।**
**सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥**

रुद्रः प्रसिद्धो गौरीशः सर्वः सर्वात्मकः स्मृतः ॥ ३०१ ॥
जीवरूपेण देहेषु समस्तेषु प्रवेशतः ।

सर्वात्मकत्वे हेतुमाह—जीवेति ।

नमोऽस्तु तस्मै रुद्राय सर्वरूपाय शंभवे ॥ ३०२ ॥
यश्चिदात्मास्ति पुरुषो विनाश्य प्रकृतिं जडाम् ।
स भक्तानुग्रहायैव रुद्रमूर्त्याविभासते ॥ ३०३ ॥
सन्महोऽबाधितं तेजः सदेवेत्यादिकश्रुतेः ।
अबाध्यस्वप्रकाशाय नतिरस्तु पुनः पुनः ॥ ३०४ ॥
यज्जडं विश्वमस्तीदं यद्भूतं चेतनात्मकम् ।
इत्थं चिदचिदात्मत्वाच्चित्रं यद्भुवनं जगत् ॥ ३०५ ॥
तत्रापि यज्जगज्जातं जायमानं च यज्जगत् ।
स सर्वोऽपि प्रपञ्चोऽयमेष रुद्रो हि वस्तुतः ॥ ३०६ ॥
न निरूपयितुं शक्यं तद्धि तद्व्यतिरेकतः ।
तस्मै रुद्राय महते नमोऽस्तु सकलात्मने ॥ ३०७ ॥

इति षोडशोऽनुवाकः

**कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शंतमꣳ हृदे । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥**

श्लाघार्थकत्थधातूत्थं प्रशंसामाह कत्पदम् ।
ततः प्रशस्तरुद्राय कद्रुद्राय प्रचेतसे ॥ ३०८ ॥
प्रकटज्ञानयुक्ताय कामसेक्तृतमाय च ।
कामप्रदाय स्तव्याय स्तोतुं योग्याय तव्यसे ॥ ३०९ ॥
हृदे हृदयवर्तित्वात्तद्रूपाय च शंतमम् ।
वचः सुखतमं स्तोत्रं कथयाम महेश्वर ॥ ३१० ॥
सर्वो हीत्यादिकं वाक्यं व्याख्यातं पूर्वमेव हि ।

इति सप्तदशोऽनुवाकः

**नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः ॥**

अत्र बाहुपदं ज्ञेयं समस्ताङ्गोपलक्षणम् ॥ ३११ ॥
सुवर्णमयदेहाय स्वभक्तानुजिघृक्षया ।
जगन्माताम्बिका तस्याः पतिर्भर्ता समीरितः ॥ ३१२ ॥
ब्रह्मविद्यात्मको देहस्तस्याश्चोमापदोदितः ।
तादृश्याः स्वामिने तस्मै नतिरस्तु पुनः पुनः ॥ ३१३ ॥
अनुवाकत्रयेणैवं ये मन्त्राः परिकीर्तिताः ।
तेषां त्वरितरुद्राख्या प्रसिद्धा मन्त्रकल्पतः ॥ ३१४ ॥

मन्त्रकल्पेष्वित्यर्थः ।

रुद्राध्यायजपे जप्याः कल्पेषु परिकीर्तिताः ।

रुद्राध्यायजपशेषत्वेन विनियोगमाह—रुद्रेति ।

इत्यष्टादशोऽनुवाकः[1]

[1] इतः परं षट्त्रिंशानुवाकपर्यन्तं न विवृतम् ।

**प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तक-**
**स्तेनान्नेनाप्यायस्व ॥**

हृदयस्पर्शमन्त्रोऽयमधुना परिकीर्त्यते ॥ ३१५ ॥
वायूनामिन्द्रियाणां च दृढग्रथनसाधनम् ।
भवसि त्वमहंकार हृदयस्थानसंस्थितः ॥ ३१६ ॥
तवाभिमानी रुद्रो यस्तद्रूपस्त्वं विनाशकः ।
दुःखस्य भूत्वा विश मां प्रविष्टो मद्वपुर्भव ॥ ३१७ ॥
अन्नेन तेन भुक्तेन मामाप्यायस्व वर्धय ।

त्वं दुःखस्य विनाशको भूत्वेत्यन्वयः ।

इति सप्तत्रिंशोऽनुवाकः

**अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।**
**ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥**

क्षुदादिजन्यविक्षेपे प्रशान्ते सति चेतसः ॥ ३१८ ॥
स्वस्वरूपानुसंधाने हेतुर्मन्त्र उदीर्यते ।

चेतसो विक्षेप इत्यन्वयः ।

हृत्पुण्डरीकमध्यस्थं नभः स्वाङ्गुष्ठमानकम् ॥ ३१९ ॥
तत्रावस्थितबुद्धिश्च तावती परिकीर्तिता ।
तदवच्छिन्नजीवश्च पुरुषोऽङ्गुष्ठमानकः ॥ ३२० ॥
स्वीयज्ञानक्रियाशक्त्या स चाङ्गुष्ठं समाश्रितः ।
चकारान्मस्तकं तद्वदेवं चापादमस्तकम् ॥ ३२१ ॥
व्यापीत्यर्थः स चोपाधिं विना वास्तवरूपतः ।

नियन्ता सर्वजगतो विश्वभुक् प्रभुरीश्वरः ॥ ३२२ ॥
अनेन भोजनेनायं प्रीतो भवति शाश्वतः ।

इत्यष्टत्रिंशोऽनुवाकः

**मेधा देवी जुषमाणा न आगा-**
**द्विश्वाची भद्रा सुमनस्यमाना ।**
**त्वया जुष्टा जुषमाणा दुरुक्ता-**
**न्बृहद्वदेम विदथे सुवीराः ॥**

जीवेश्वरैक्यज्ञानाख्यै मेधा देवी प्रशस्यते ॥ ३२३ ॥
ग्रन्थार्थधारणे शक्तिर्मेधा तदभिमानिनी ।
देवी नः प्रीयमाणागादायात्वस्मान्प्रतीश्वरी ॥ ३२४ ॥
विश्वमञ्चति विश्वाची सर्वसंग्रहणक्षमा ।
अनुग्राहकमस्माकमिच्छन्ती शोभनं मनः ॥ ३२५ ॥
भद्रात एव कल्याणी देव्यागच्छतु नः प्रति ।
त्वया जुष्टा गृहीतास्तु वयं वेदबहिःस्थितान् ॥ ३२६ ॥
श्रेयोविरोधिनः शब्दानभजन्तः सुपुत्रकाः ।

गृहीताः, अनुगृहीता इत्यर्थः ।

सुवीराः साधुशिष्याश्च विदथेऽनुष्ठिते सति ॥ ३२७ ॥
यागे विशुद्धमनसो ब्रह्म यत्कथयाम तत् ।

**त्वया जुष्ट ऋषिर्भवति देवि**
**त्वया ब्रह्मा गतश्रीरुत त्वया ।**
**त्वया जुष्टश्चित्रं विन्दते वसु**
**सा नो जुषस्व द्रविणेन मेधे ॥**

त्वया देवि गृहीतोऽनु स्यादतीन्द्रियदर्शनः ॥ ३२८ ॥
त्वया जुष्टः पुमान्ब्रह्मा भवतीह प्रजापतिः ।

अनुगृहीत इत्यन्वयः । ब्रह्मा ; हिरण्यगर्भ इत्यर्थः ।

उतापि च त्वया जुष्टः प्राप्तसंपद्भवत्ययम् ॥ ३२९ ॥
अत एव त्वया जुष्टो गोभूहेमादिकं धनम् ।
लभते विविधं मेधे सा त्वं स्वेन गृहाण नः ॥ ३३० ॥

स्वेन ; धनेनानुगृहाणेत्यर्थः ।

इत्येकोनचत्वारिंशोऽनुवाकः

**मेधां म इन्द्रो ददातु मेधां देवी सरस्वती ।**
**मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजा ॥**

मेधां ददातु मे शक्रो दत्तां देवी सरस्वती ।
उभावप्यश्विनौ देवौ मह्यं मेधां प्रयच्छताम् ॥ ३३१ ॥
पद्ममालासमायुक्तौ शिष्टं स्पष्टार्थमीरितम् ।

इति चत्वारिंशोऽनुवाकः

**अप्सरासु या मेधा गन्धर्वेषु च यन्मनः ।**
**दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषताम् ॥**

या मेधास्ति सुरस्त्रीषु गन्धर्वेषु च यन्मनः ॥ ३३२ ॥
मेधात्मकं देवनिष्ठा या च मेधा मनुष्यजा ।
मनुष्येषु बहुज्ञेषु स्थिता सा सकला च माम् ॥ ३३३ ॥
जुषतां सेवतां मेधा सर्वकामदुघा सती ।

इत्येकचत्वारिंशोऽनुवाकः

**आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या ।**
**ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषताम् ॥**

मामागच्छतु मेधेति क्रियाध्याहृतिरिष्यते ॥ ३३४ ॥
सुरभिः शुभगन्धाढ्या यद्वा कामदुघा भवेत् ।
क्षमत्वाद्बहुविद्याया धारणे बहुरूपिणी ॥ ३३५ ॥
सर्वगत्वाज्जगद्रूपा जगम्या पुरुषार्थिभिः ।
भृशं गम्या बलवती क्षीरादिकरसेन माम् ॥ ३३६ ॥
पिन्वमाना प्रीणयन्ती सा तादृग्गुणसंयुता ।
मेधा मां सुमुखी भूत्वा जुषतां सेवतां सदा ॥ ३३७ ॥

ऊर्जस्वतीत्यस्यार्थो बलवतीति ।

इति द्विचत्वारिंशोऽध्यायः

**सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।**
**भवे भवे नातिभवे भजस्व मां भवोद्भवाय नमः ॥**

मेधाविनो ज्ञानसिद्ध्यै कथ्यन्ते मन्त्रसत्तमाः ।
सद्योजाताभिधं वक्त्रं पश्चिमं परमेशितुः ॥ ३३८ ॥
तद्रूपं परमेशानं प्रपद्यामि भजाम्यहम् ।
नमोऽस्तु सद्योजाताय पश्चिमास्यस्वरूपिणे ॥ ३३९ ॥
तत्तज्जन्मनिमित्तं मां न भजस्व न चोदय ।
किं तर्ह्यतिभवे देव जन्मातिक्रमसिद्धये ॥ ३४० ॥
भजस्व तत्त्वज्ञानाय मां प्रेरय महेश्वर ।

इति त्रिचत्वारिंशोऽध्यायः

**वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥**

उदग्वक्त्रात्मको ज्ञेयो वामदेवः प्रकीर्तितः ॥ ३४१ ॥
तद्विग्रहविशेषाः स्युरेते ज्येष्ठादिनामकाः ।
वामदेव्यादिशक्तीनां नवानां शिवपीठके ॥ ३४२ ॥
पतयो नव तेभ्योऽपि नमस्कारोऽस्तु नित्यशः ।

इति चतुश्चत्वारिंशोऽध्यायः

**अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वतः शर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥**

अघोरनामको देवो दक्षिणास्यात्मकः शिवः ॥ ३४३ ॥
तद्विग्रहा अघोराः स्युः प्रशान्ताः सात्त्विकत्वतः ।
अन्ये तु राजसत्वेन घोराः स्युरपरे पुनः ॥ ३४४ ॥
घोरादपि घोरतरास्तामसत्वेन हेतुना ।
हे शर्व रुद्ररूपेभ्यः सर्वेभ्यस्तेभ्य एव च ॥ ३४५ ॥
सर्वतः सर्वदेशेषु सर्वदा नतिरस्तु नः ।

इति पञ्चचत्वारिंशोऽध्यायः

**तत्पुरुषाय विद्महे महादेवाय धीमहि ।**
**तन्नो रुद्रः प्रचोदयात् ॥**

अत्र तत्पुरुषो नाम प्राग्वक्त्रात्मक ईरितः ॥ ३४६ ॥
द्वितीयार्थे चतुर्थी स्यात्तादृशं विद्महे शिवम् ।

गुरुशास्त्रमुखाज्ज्ञात्वा महादेवं च धीमहि ॥ ३४७ ॥
ध्यायेम तस्माद्रुद्रो नः प्रेरयत्वात्मसंविदे ।

ज्ञानध्यानार्थमित्यर्थः ।

इति षट्चत्वारिंशोऽनुवाकः

**ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम् ॥**

ऊर्ध्ववक्त्रो महादेवो वेदशास्त्रादिकाश्च याः ॥ ३४८ ॥
चतुःषष्टिकलास्तासामीशानः स्यान्नियामकः ।
ईश्वरः सर्वभूतानां नियन्ता सर्वदेहिनाम् ॥ ३४९ ॥
वेदस्याप्यधिकत्वेन पालको ब्रह्मणस्तथा ।
प्रजापतेरधिपतिर्ब्रह्माख्यः परमेश्वरः ॥ ३५० ॥
शिवो ममानुग्रहाय शान्तो भवतु सर्वदा ।
सदाशिवो स एवाहं भवामि परमेश्वरः ॥ ३५१ ॥

ओम्; अहं भवामीत्यर्थः ।

इति सप्तचत्वारिंशोऽध्यायः

इत्थं पञ्च ब्रह्ममन्त्राः पञ्चवक्त्रनिरूपकाः ।
तत्त्वधीहेतवः प्रोक्तास्तज्ज्ञानप्रतिबन्धकम् ॥ ३५२ ॥
ब्रह्महत्यादि यत्पापं तद्विनाशनहेतवः ।
त्रिसुपर्णाभिधा मन्त्रा वक्ष्यन्ते बोधसिद्धये ॥ ३५३ ॥

**ब्रह्ममेतु माम् । मधुमेतु माम् । ब्रह्ममेव मधुमेतु माम् । यास्ते सोम प्रजा वथ्सोऽभि सो अहम् । दुस्स्वप्नहन्दुरुष्वह । यास्ते सोम प्राणाꣳस्तां जुहोमि ।**

**त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । ब्रह्महत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ सहस्रात्पङ्क्तिं पुनन्ति । ओम् ॥**

मामेतु परमं ब्रह्म मधु माधुर्यसंयुतम् ।
परमानन्दरूपं यन्मामवाप्नोतु वस्तु तत् ॥ ३५४ ॥
अत्यन्तमर्थभेदोऽस्ति न ब्रह्ममधुशब्दयोः ।
अखण्डैकरसं वस्तु मामेतु प्रतिपद्यताम् ॥ ३५५ ॥

ब्रह्ममेवेत्यादिवाक्यस्यार्थमाह—अत्यन्तमित्यादिना ।

यास्त्युमा ब्रह्मविद्याख्या तद्युक्त परमेश्वर ।
तव देवमनुष्याद्याः प्रजा याः सन्ति ता अपि ॥ ३५६ ॥
सोऽहं वत्सो बालकः स्यां तासां मध्ये हि बालवत् ।
अहं त्वत्करुणायोग्यस्तस्मात्संसारघातक ॥ ३५७ ॥
दुःखं विनाशयात्यन्तं हे सोम परमेश्वर ।

श्रुतौ अभीति; अभिलक्ष्येत्यर्थः । दुरुष्वह; दुःखमुत्कर्षेणाभिभव । वर्णविकारश्छान्दस· । तदिदमाह—दुःखं विनाशयात्यन्तमिति ।

ते प्राणवृत्तयो याः स्युस्तदीयास्त्वत्कृतत्वतः ॥ ३५८ ॥
जुहोमि त्वयि तान् प्राणान्मनो वागादयो हि मे ।
त्वया विनिर्मितत्वेन त्वदीया एव तानतः ॥ ३५९ ॥
त्वय्येव संहरामीश विषयेभ्यो निरुध्य तान् ।
त्वदेकचित्तो भूयासं तथैवानुगृहाण माम् ॥ ३६० ॥
त्रिसुपर्णस्य मन्त्रस्य माहात्म्यं ब्रह्मणोदितम् ।
नापृष्टः कस्यचिद् ब्रूयादिति शास्त्रानुसारतः ॥ ३६१ ॥

कृतायां शिष्ययाच्ञायां पश्चाद्विद्योपदिश्यते ।
इमं तु त्रिसुपर्णाख्यं मन्त्रं याच्ञां विनैव च ॥ ३६२ ॥
विप्रायोपदिशेत्तेन ह्युपदेशेन ये द्विजाः ।
त्रिसुपर्णं जपन्त्येते घ्नन्ति ब्रह्मवधं द्विजाः ॥ ३६३ ॥
ततः पापेन रहिताः सोमयोगं व्रजन्ति ते ।
उमासहितमीशानं प्राप्नुवन्तीति किंचन ॥ ३६४ ॥
यस्यां पङ्क्तौ ब्राह्मणानामुपविष्टा भवन्ति ताम् ।
सहस्रद्विजपर्यन्तां पङ्क्तिं शुद्धां प्रकुर्वते ॥ ३६५ ॥
तस्मादों प्रणवार्थोऽस्य परमात्मैव देवता ।
त्रिसुपर्णाख्यमन्त्रस्येत्येवं मन्त्रार्थ ईरितः ॥ ३६६ ॥

**ब्रह्म मेधया । मधु मेधया । ब्रह्ममेव मधु मेधया । अद्या नो देव सवितः प्रजावत्सावीः सौभगम् । परा दुःष्वप्नियꣳ सुव । विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्म आसुव । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ।**

**य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । भ्रूणहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ सहस्रात्पङ्क्तिं पुनन्ति । ओम् ॥**

गुरूपदिष्टवाक्यस्य तदर्थस्य च धारणे ।
शक्तिर्मेधा तया ब्रह्म लभ्यतां परमेश्वरः ॥ ३६७ ॥
मध्वित्यादिकवाक्यस्य व्याख्यानं पूर्ववद्भवेत् ।
अद्येत्याद्या ऋचः पञ्च व्याख्याताः पूर्वमेव च ॥ ३६८ ॥

पूर्वमेव ; अणोरणीयानित्यनुवाक इत्यर्थः ।

वधो ब्राह्मणगर्भस्य राजगर्भस्य वा भवेत् ।
भ्रूणहत्यावशिष्टं तु यथापूर्वं विबुध्यताम् ॥ ३६९ ॥

इत्येकोनपञ्चाशोऽनुवाकः

**ब्रह्म मेधवा । मधु मेधवा । ब्रह्ममेव मधु मेधवा ।**

**ब्रह्मा देवानां पदवीः कवीना-**
**मृषिर्विप्राणां महिषो मृगाणाम् ।**
**श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ**
**सोमः पवित्रमत्येति रेभन् ॥**
**हꣳसः शुचिषद्वसुरन्तरिक्षस-**
**द्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा**
**गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥**

**य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । वीरहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ सहस्रात्पङ्क्तिं पुनन्ति । ओम् ॥**

मेधशब्दितयज्ञोऽस्यास्तीति मेधवदुच्यते ।
यज्ञादिजन्यज्ञानस्य ब्रह्मणो विषयत्वतः ॥ ३७० ॥
ब्रह्म मेधवदित्येतज्ज्ञेयं शेषं तु पूर्ववत् ।
ब्रह्मेत्यादि यदृग्द्वन्द्वं तदपि व्याकृतं पुरा ॥ ३७१ ॥
वेदशास्त्रपरिज्ञाता तदनुष्ठानतत्परः ।
विप्रोऽभिषिक्तो राजा वा वीरोऽन्यत्पूर्ववद्भवेत् ॥ ३७२ ॥
ब्रह्महत्यादिदोषा ये ब्रह्मधीप्रतिबन्धकाः ।

त्रिसुपर्णाख्यमन्त्राः स्युस्तन्महापातकान्तकाः ॥ ३७३ ॥
विप्रमात्रवधस्तत्र ब्रह्महत्या ततोऽधिका ।
भ्रूणहत्या वीरहत्या तस्या अप्यधिका स्मृता ॥ ३७४ ॥
त्रिसुपर्णाख्यमन्त्राणां यावज्जीवजपान्नृणाम् ।
अप्येतादृशपापानां विनिवृत्तिर्भवेद् ध्रुवम् ॥ ३७५ ॥
सुरापानादिपापानां निवृत्तिरिति का कथा ।

पापानाम्; पातकानामित्यर्थः ।

इति पञ्चाशोऽनुवाकः[1]

**[2]सत्यं परं परꣳ सत्यं सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सताꣳ हि सत्यं तस्मात्सत्ये रमन्ते**

नरस्य ज्ञानयोग्यस्य महापापादिनाशतः ॥ ३७६ ॥
परमोत्कृष्टतां वक्तुं न्यासस्य ज्ञानहेतुषु ।
सत्याद्येकादशोत्कृष्टा वक्तव्या ज्ञानहेतवः ॥ ३७७ ॥

नरस्य वक्तव्या इत्यन्वयः । प्रतियोगित्वेनेति शेषः ।

प्रथमं साधनं तत्र सत्यमत्र निरूप्यते ।
यथादृष्टं प्रमाणेन तथोक्तिः सत्यमुच्यते ॥ ३७८ ॥
पुमर्थहेतुषूत्कृष्टं परं तच्च प्रकीर्तितम् ।
तत्रादरार्थं भूयश्च परं सत्यमितीरितम् ॥ ३७९ ॥
यद्वा यथा परं ब्रह्माबाध्यं सत्यमिदं तथा ।
व्यावहारिकबाधस्य राहित्येन प्रकृष्टताम् ॥ ३८० ॥

[1] इतः परमेकषष्टितमानुवाकपर्यन्तं न विवृतम् ।

[2] यद्यपीत आरभ्य 'न्यास एवात्यरेचयद्य एवं वेदेत्युपनिषत्' इत्यन्तमेकं वाक्यं, तथापि विवृतिसौकर्याय खण्डशो विभज्य निर्दिष्टम् ।

विवक्षित्वा परं सत्यमिति दृष्टान्ततः स्मृतम् ।
यावज्जीवं यथार्थोक्त्या स्वर्गलोकात्कदाचन ॥ ३८१ ॥
न प्रच्युताः स्युरन्ये तु स्वर्गं प्राप्यापि पुण्यतः ।
अनृतप्रोक्तिदोषेणाननुभूयैव कर्मणः ॥ ३८२ ॥
फलं पूर्णतया स्वर्गाच्च्यवन्तेऽनृतवादिनः ।
यथार्थवचनं यस्मात्सतां सन्मार्गवर्तिनाम् ॥ ३८३ ॥
संबन्धि तस्मात्केचित्तु सतामिदमिति श्रुतेः ।

श्रुतेः ; व्युत्पत्तेरित्यर्थः ।

उत्कृष्टहेतुर्मोक्षस्य सत्योक्तिरिति वादिनः ॥ ३८४ ॥
सत्ये रमन्ते क्रीडन्ते तस्मिन्नेव मनीषिणः ।

इति वादिनः केचिन्मनीषिणः तस्मिन्नेव सत्ये रमन्त इत्यन्वयः । मोक्षस्येति ; मोक्षहेतुज्ञानस्य हेतुरित्यर्थः । एवमग्रेऽपि ।

**तप इति तपो नानशनात्परं यद्धि परं तपस्तद् दुर्धर्षं तद् दुराधर्षं तस्मात्तपसि रमन्ते**

एकं मतं कीर्तयित्वा द्वितीयं मतमुच्यते ॥ ३८५ ॥
तपः परं मोक्षहेतुरिति केचित्प्रचक्षते ।
तीर्थयात्राजपादीनि तपांस्यन्यानि भूरिशः ॥ ३८६ ॥
तथाप्यनशनं तेषु समस्तेषु परं भवेत् ।
उपवासादनशनान्न परं विद्यते तपः ॥ ३८७ ॥
कृच्छ्रादिकं यत्तपोऽस्ति तत्सोढुं शक्यमेव न ।
अत एव दुराधर्षमासमन्ताच्छरीरिणाम् ॥ ३८८ ॥
तस्य सोढुमशक्यत्वं सर्वेषामनुभूयते ।

तस्मात्केचिद्रमन्तेऽस्मिन् कृच्छ्रचान्द्रायणादिके ॥ ३८९ ॥

तस्य ; तपस इत्यर्थः ।

**दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते**

दमो बाह्येन्द्रियाणां स्याद्विषयेभ्यो निवर्तनम् ।
स एव मुक्तिहेतुः स्यादिति नैष्ठिकवर्णिनः ॥ ३९० ॥
मन्यन्ते सर्वदा तस्माद्रमन्ते दम एव ते ।

**शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते**

क्रोधादिदोषराहित्यं मनसः शम उच्यते ॥ ३९१ ॥
स एव मुक्तिहेतुः स्यादित्यरण्यनिवासिनः ।
मन्यन्ते मुनयस्तस्माद्रमन्ते शम एव ते ॥ ३९२ ॥

**दानमिति सर्वाणि भूतानि प्रशꣳसन्ति दानान्नातिदुष्करं तस्माद्दाने रमन्ते**

स्वीयानां भूगवादीनां शास्त्रप्रोक्तेन वर्त्मना ।
स्वत्वस्य त्यागपूर्वं यत्परस्वत्वप्रसञ्जनम् ॥ ३९३ ॥
तद्दानमेव परमं मत्वा मोक्षस्य साधनम् ।
स्तुवन्ति सकला दानादत्यन्तं नास्ति दुष्करम् ॥ ३९४ ॥
दृश्यन्ते धनरक्षार्थं त्यजन्तोऽसूनपि प्रियान् ।
तस्माद्गोभूहिरण्यादेर्दाने सक्तिं प्रकुर्वते ॥ ३९५ ॥

**धर्म इति धर्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुश्चरं तस्माद्धर्मे रमन्ते**

स्मृत्याद्युक्तं तटाकादेर्निर्माणं धर्म उच्यते ।

स एव मुक्तिहेतुः स्यादिति राजादयो नराः ॥ ३९६ ॥
मन्यन्ते तेन धर्मेण गृहीतं सकलं जगत् ।
तुष्यन्ति स्नानपानाद्यैर्नरपक्षिमृगादयः ॥ ३९७ ॥
नैवास्ति दुश्चरं तस्मात्प्रभवोऽस्मिन् रतास्ततः ।

**प्रजन इति भूयाꣳसस्तस्माद्भूयिष्ठाः प्रजायन्ते तस्माद्भूयिष्ठाः प्रजनने रमन्ते**

प्रजनं तनयादीनामुत्पादनमितीर्यते ॥ ३९८ ॥
तस्यैवोत्तमहेतुत्वं मन्यन्ते बहवो जनाः ।
दरिद्रैर्धनिकैः शिष्टैरशिष्टैश्च प्रवृत्तितः ॥ ३९९ ॥

प्रवृत्तितः ; पुत्राद्युत्पादन इति शेषः ।

तस्मादेकैकलोकस्य जायन्ते बहवः प्रजाः ।
तस्माद्रमन्ते बहवः पुत्राद्युत्पादने नराः ॥ ४०० ॥

**अग्नय इत्याह तस्मादग्नय आधातव्याः**

अग्नयो गार्हपत्याद्याः परमा मुक्तिहेतवः ।
इत्याह वैदिकः कश्चित्तस्माद्धेतोर्गृहस्थितैः ॥ ४०१ ॥
अग्नयो गार्हपत्याद्या आधातव्या भवन्ति ते ।

वैदिकः, वेदार्थपरः । गृहस्थितैः ; गृहस्थैरित्यर्थः ।

**अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते**

आहितेऽग्नावनुष्ठेयो होमः स्यादग्निहोत्रकम् ॥ ४०२ ॥
तदुत्तमं मुक्तिहेतुरिति कश्चन वैदिकः ।
आह तस्मादग्निहोत्रे रमन्ते गृहिणः सदा ॥ ४०३ ॥

**यज्ञ इति यज्ञो हि देवानां यज्ञेन हि देवा दिवं गतास्तस्माद्यज्ञे रमन्ते**

ज्योतिष्टोमादिको यज्ञः परमो मोक्षसाधनम् ।
इति केचन मन्यन्ते वेदार्थासक्तमानसाः ॥ ४०४ ॥
यस्मादाधुनिका देवाः पूर्वानुष्ठितयज्ञतः ।
स्वर्गलोकं गतास्तस्माद्यज्ञे केचिद् बुधा रताः ॥ ४०५ ॥

**मानसमिति विद्वाꣳसस्तस्माद्विद्वाꣳस एव मानसे रमन्ते**

विद्वांसः सगुणज्ञाः स्युर्मनःसाध्यं तु मानसम् ।
उपासनं परं हेतुरित्येते मेनिरे बुधाः ॥ ४०६ ॥

बुधाः ; सगुणब्रह्मविद इत्यर्थः ।

तस्मान्मानस एवैके समासक्ता मनीषिणः ।
वैदिकोपास्तिभागस्य तात्पर्यज्ञानशालिनः ॥ ४०७ ॥

**न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपाꣳसि न्यास एवात्यरेचयत्**

वैधानां कर्मणां त्यागो विधिना न्यास उच्यते ।
न्यास एवोत्तमो मुक्तेर्हेतुः स्यादिति मन्यते ॥ ४०८ ॥
ब्रह्मा हिरण्यगर्भोऽयं स ब्रह्मा पर एव हि ।
न तु जीवो यथा तत्तन्मतज्ञैः प्राक् समीरितः ॥ ४०९ ॥
यद्यप्यसौ देहधारी तथापि पर एव हि ।
तत्समानज्ञानवत्त्वात्तच्छिष्यत्वेन हेतुना ॥ ४१० ॥
सत्यादीनि तपांस्येव निकृष्टानि तथाप्यतः ।

तथापि न्यासान्निकृष्टा इत्यर्थः ।

संन्यास एव सर्वाणि तान्यतिक्रान्तवानयम् ॥ ४११ ॥
आधिक्यतारतम्यं च तत्र विश्रान्तमिष्यते ।

**य एवं वेदेत्युपनिषत् ॥**

उपसंहरतीदानीमुक्तमुत्तमसाधनम् ॥ ४१२ ॥
सर्वेभ्यः साधनेभ्यश्च संन्यासस्य प्रकृष्टताम् ।
यो वेद तस्य विदुष इत्येवं परिकीर्तिता ॥ ४१३ ॥
विद्या रहस्यरूपा स्यादित्यर्थः सद्भिरीरितः ।

इति द्विषष्टितमोऽनुवाकः

**प्राजापत्यो हारुणिः सुपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच**

प्रागुक्तमोक्षहेत्वर्थमुपपादयितुं श्रुतिः ॥ ४१४ ॥
आख्यायिकां प्रवक्तयेषा गुरुशिष्योक्तिगर्भिणीम् ।
आरुण्याख्यः सुपर्णायास्तनयश्च प्रजापतेः ॥ ४१५ ॥
गुरूपसदनं चक्रे पप्रच्छ तदनन्तरम् ।
पूज्या महर्षयो मुक्तेः साधनेष्वखिलेषु च ॥ ४१६ ॥
किमुत्कृष्टं वदन्तीति तस्मै गुरुरुवाच सः ।

**सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति**

साधनेषु तदुक्तेषु प्रथमं वक्ति साधनम् ॥ ४१७ ॥
योऽन्तरिक्षेऽधुना वाति स वायुः पूर्वजन्मनि ।
नरः सन्सत्यवादित्वं परिपाल्यैव सत्यतः ॥ ४१८ ॥
संप्राप्य वायुदेवत्वं लोकानुग्रहवाञ्छया ।
सदा चरति सूर्योऽपि पूर्वानुष्ठितसत्यतः ॥ ४१९ ॥

दिवि प्रकाशते सत्यं प्रतिष्ठा वाच उच्यते ।
वाचोक्तमनृतं त्वन्यैर्निराक्रियत इत्यतः ॥ ४२० ॥
प्रतिष्ठा न हि वाचः स्यात्सत्ये सर्वं प्रतिष्ठितम् ।
समस्तव्यवहारोऽपि सत्यवाचि प्रतिष्ठितः ॥ ४२१ ॥
तस्मात्केचित्सत्यमेव प्रकृष्टं साधनं जगुः ।

अतोऽनृतं न हि वाचः प्रतिष्ठेत्यन्वयः ।

**तपसा देवा देवतामग्र आयन् तपसर्षयः सुवरन्वविन्दन्तपसा सपत्नान्प्रणुदामारातीः स्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति**

तत्रासंतुष्टतां दृष्ट्वा द्वितीयं प्राह साधनम् ॥ ४२२ ॥

मुखविकासराहित्यलक्षणमपरितोषमारुणेर्दृष्ट्वेत्यर्थः ।

देवा देवत्वमधुना संप्राप्ताः पूर्वजन्मनि ।
अनुष्ठितेन तपसा कृच्छ्रचान्द्रायणादिना ॥ ४२३ ॥
पूर्वार्जितेन तपसा स्वर्गं प्राप्ता महर्षयः ।
वयं च तपसा शत्रून् द्रव्यलाभविरोधिनः ॥ ४२४ ॥
नरांश्चात्र निराकुर्मः समस्तं तपसि स्थितम् ।
तस्माद्वदन्त्यनशनं परमं मोक्षसाधनम् ॥ ४२५ ॥

तपसेति ; अभिचाररूपतपसेत्यर्थः ।

**दमेन दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणः सुवरगच्छन्दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति**

पूर्वत्रापरितोषेण साधनान्तरमुच्यते ।
दुःशकं सर्वतः सोढुं दुराधर्षं दमो भवेत् ॥ ४२६ ॥

अपेक्षितं फलं सर्वं दम एव प्रतिष्ठितम् ।

**शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानां दुराधर्षं शमे सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति**

क्रोधादिरहिताश्चित्ते पुमर्थं प्राप्नुयुर्नराः ॥ ४२७ ॥
शमेन स्वर्गमगमन्नारदाद्या मुनीश्वराः ।

**दानं यज्ञानां वरूथं दक्षिणा लोके दातारꣳ सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति**

गोहिरण्यादिदानं स्याद्यज्ञानां दक्षिणा ततः ॥ ४२८ ॥
श्रेष्ठं लोकेऽपि दातारं वेदशास्त्रविदो जनाः ।
मूढाश्चैवोपजीवन्ति भटानां धनदानतः ॥ ४२९ ॥
नृपाः शत्रून्निराचक्रुः प्रबला ये द्विषन्ति ते ।
धनदानेन संतुष्टा भवन्ति सुहृदो जनाः ॥ ४३० ॥

**धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति**

तटाकादिकनिर्माणं धर्म इत्येवमीरितम् ।
स सर्वप्राणिजातस्य प्रतिष्ठा श्रेय उच्यते ॥ ४३१ ॥
उपजीवन्ति धर्मिष्ठं लोके सर्वाः प्रजा नराः ।
धर्माधर्मविवेकार्थमुपगच्छन्ति सर्वशः ॥ ४३२ ॥
प्रायश्चित्तेन धर्मेण नाशयन्ति च किल्बिषम् ।

**प्रजननं वै प्रतिष्ठा साधु प्रजायास्तन्तुं तन्वानः पितृणामनृणो भवति तदेव तस्यानृणं तस्मात्प्रजननं परमं वदन्ति**

पुत्रोत्पादनमेवेदं प्रतिष्ठा गृहिणां भवेत् ॥ ४३३ ॥
गृहकृत्यस्य निर्वोढा पुत्र एव न हीतरः ।
जय्यो मनुष्यलोकोऽयं पुत्रेणैवेति हि श्रुतिः ॥ ४३४ ॥
पुत्रपौत्रादिरूपा स्यात्प्रजा तस्याः परंपराम् ।
यथाशास्त्रं वितन्वानः पितॄणामनृणो भवेत् ॥ ४३५ ॥
ऋणं तदीयं पुत्रेण सम्यक्प्रत्यर्पितं भवेत् ।
पुत्रोत्पादनमेव स्यादृणापाकरणं पितुः ॥ ४३६ ॥

**अग्नयो वै त्रयी विद्या देवयानः पन्था गार्हपत्य ऋक्पृथिवी रथन्तरमन्वाहार्यपचनो यजुरन्तरिक्षं वामदेव्यमाहवनीयः साम सुवर्गो लोको बृहत्तस्मादग्नीन् परमं वदन्ति**

त्रयोऽग्नयस्त्रयी विद्या वेदैकविहितत्वतः ।
वेदत्रयोक्तकर्माणि यानि तत्साधनत्वतः ॥ ४३७ ॥
देवत्वप्रापको मार्गो यागद्वारेण कीर्तितः ।
किंचायं गार्हपत्योऽग्निर्ऋग्वेदात्मक ईरितः ॥ ४३८ ॥
पृथ्वीलोकस्वरूपश्च यद्रथन्तरसाम तत् ।

सामेति; सामात्मक इत्यर्थः ।

दक्षिणाग्निर्यजुर्वेदश्चान्तरिक्षात्मकः स्मृतः ॥ ४३९ ॥
वामदेवाख्यसामात्मा भवतीति प्रशस्यते ।
सामवेदः स्वर्गलोको बृहत्सामेति यत् त्रयम् ॥ ४४० ॥
तदात्माहवनीयः स्यादित्यसौ च प्रशस्यते ।

**अग्निहोत्रꣳ सायं प्रातर्गृहाणां निष्कृतिः स्विष्टꣳ सुहुतं यज्ञक्रतूनां प्रायणꣳ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति**

अग्निहोत्रं कृतं सायं प्रातश्च गृहनिष्कृतिः ॥ ४४१ ॥
अग्निहोत्रस्य विरहे क्षुधितोऽग्निर्गृहान्दहेत् ।
क्रयसाधनमूल्यं तु निष्कृतिः परिकीर्त्यते ॥ ४४२ ॥
यागो द्रव्यपरित्यागो देवमुद्दिश्य कीर्तितः ।
तत्तद्द्रव्यस्य दहने प्रक्षेपो होम उच्यते ॥ ४४३ ॥
यज्ञानां च क्रतूनां च प्रारम्भकमिदं स्मृतम् ।
अत एवाग्निहोत्रं स्यात्स्वर्गलोकप्रकाशकम् ॥ ४४४ ॥

अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणी चेति सप्त हविर्यज्ञाः। क्रतुशब्दो यूपवत्सु सोमयागेषु रूढः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामश्चेति सप्त सोमसंस्थाः क्रतवः ।

**यज्ञ इति यज्ञो हि देवानां यज्ञेन हि देवा दिवं गता यज्ञेनासुरानपानुदन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति**

उत्तमं साधनं यज्ञ इति केचित्प्रचक्षते ।
यज्ञः प्रियो हि देवानां ते हि देवा दिवं गताः ॥ ४४५ ॥
पूर्वानुष्ठितयज्ञेन स्वर्गलोकं प्रपेदिरे ।
ज्योतिष्टोमेन यज्ञेन सर्वकामाप्तिहेतुना ॥ ४४६ ॥
द्विषत्प्रशान्तिकामस्य मित्राः स्युर्द्वेषकारिणः ।

**मानसं वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति**

प्राजापत्यपदप्राप्तेः साधनं स्यादुपासनम् ॥ ४४७ ॥
अत एव पवित्रं स्याच्छुद्धिहेतुत्वकारणात् ।
उपासनेन युक्तं यत्तेनैकाग्रेण चेतसा ॥ ४४८ ॥
साक्षात्करोति योगीशः सम्यग्व्यवहितादिकम् ।
अतीतानागतं तच्च योगशास्त्रे प्रपञ्चितम् ॥ ४४९ ॥
एकाग्रमनसा युक्ता विश्वामित्रादयः प्रजाः ।
बह्वीः संकल्पमात्रेण सृष्टवन्तो महर्षयः ॥ ४५० ॥

**न्यास इत्याहुर्मनीषिणो ब्रह्माणम्**

यो मोक्षहेतुः संन्यास इत्युक्तस्तं महर्षयः ।
हिरण्यगर्भमेवाहुः सुधियः स्मृतिकारिणः ॥ ४५१ ॥
संन्यासाद्ब्रह्मणः स्थानमिति हि स्मर्यते बुधैः ।
तत्प्राप्तेरन्तरङ्गत्वादस्य तद्रूपतोदिता ॥ ४५२ ॥

अन्तरङ्गत्वादिति ; अन्तरङ्गसाधनत्वादित्यर्थः ।

**ब्रह्मा विश्वः कतमः स्वयंभुः प्रजापतिः संवथ्सर इति**

स्तोतुं तमेव संन्यासं तत्संप्राप्यं प्रपञ्च्यते ।

तत् ; हिरण्यगर्भस्वरूपमित्यर्थः ।

हिरण्यगर्भो विश्वः स्यात्समस्तजगदात्मकः ॥ ४५३ ॥
अतीव सुखरूपश्च मात्रादिरहितत्वतः ।
स्वयमेव समुत्पन्नः प्रजानां परिपालकः ॥ ४५४ ॥
कालात्मा चेतिशब्दस्तु प्रदर्शनपरः स्मृतः ।
इत्यादिसर्वरूपत्वमुन्नेयमिति मन्यताम् ॥ ४५५ ॥

**संवथ्सरोऽसावादित्यो य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा**

संवत्सरस्य माहात्म्यं सूत्राङ्गस्य प्रदर्श्यते ।
भूयस्तस्य प्रकृष्टस्य न्यासस्य स्तुतयेऽधुना ॥ ४५६ ॥

सूत्रेति ; हिरण्यगर्भावयवस्येत्यर्थः ।

योऽयं संवत्सरः कालः सोऽसावादित्य एव हि ।
आदित्यगमनावृत्त्या तस्य संपादितत्वतः ॥ ४५७ ॥
आदित्यमण्डले योऽयं पुरुषो वर्तते स च ।
हिरण्यगर्भरूपः स्यान्मण्डलद्वारतो ह्ययम् ॥ ४५८ ॥
हिरण्यगर्भः प्राप्यः स्यात्स ब्रह्म परमं भवेत् ।
तथैव प्रत्यगात्मा स्यादित्यर्थः परिकीर्तितः ॥ ४५९ ॥

**याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिः शान्त्या चित्तं चित्तेन स्मृतिᳲ स्मृत्या स्मारᳲ स्मारेण विज्ञानं विज्ञानेनात्मानं वेदयति तस्मादन्नं ददन्थ्सर्वाण्येतानि ददात्यन्नात्प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्मयोनिः**

संवत्सरं प्रशस्यैवं सूर्यादिद्वारतस्ततः ।
समस्तव्यवहाराय मण्डलद्वारतो रवेः ॥ ४६० ॥
हेतुत्वेन स एवायं हायनोऽत्र प्रशस्यते ।

स एवायं संवत्सरः आदित्यमण्डलद्वारा सर्वव्यवहारहेतुतया स्तूयत इत्यर्थः ।

याभिरुष्णस्वरूपाभिरर्कस्तपति रश्मिभिः ॥ ४६१ ॥
ताभिर्भूजलमादाय मेघो भूत्वा प्रवर्षति ।
व्रीह्यादिरोषधिर्ज्ञेया पनसादिर्वनस्पतिः ॥ ४६२ ॥
व्रीह्यादिभिर्भवेद्भोज्यं प्राणास्तृप्यन्ति भोज्यतः ।
प्राणैर्देहबलं तेन तपः कृच्छ्रादिलक्षणम् ॥ ४६३ ॥
तपसा शुद्धचित्तस्य श्रद्धा ब्रह्मात्मवेदने ।
श्रद्धयैकाग्रचित्तस्य शक्तिर्ग्रन्थार्थधारणे ॥ ४६४ ॥
मेधया तत्त्वबुद्ध्याख्या मनीषा स्यान्मनीषया ।
मनोनिरन्तरत्वेन मननं जायते ततः ॥ ४६५ ॥
क्रोधाद्यवसराभावाच्छान्तिः शान्त्या प्रमाणजम् ।
तत्त्वज्ञानाभिधं चित्तं तेन चित्तेन सर्वदा ॥ ४६६ ॥
निद्रादिव्यवधानेऽपि लभते तत्त्वसंस्मृतिम् ।
निद्राद्यनन्तरोत्थेन स्मरणेन निरन्तरम् ॥ ४६७ ॥
स्माराख्यं लभते तेन संततज्ञानमश्नुते ।

तेन ; स्मारपदाभिधेयेन निरन्तरस्मरणेन विज्ञानमेतीत्यर्थः ।

विज्ञानेन परात्मानं सर्वदानुभवत्ययम् ॥ ४६८ ॥
यस्मात्प्राणादिकद्वारा ब्रह्मानुभवहेतुता ।
अन्नस्यातो ददद्ध्यन्नं ददात्येतानि सर्वशः ॥ ४६९ ॥
सर्वप्रदानरूपत्वमन्नदानस्य संप्रति ।
विस्पष्टयितुमुक्तोऽर्थः पुनः संक्षिप्य कीर्त्यते ॥ ४७० ॥
अन्नात्प्राणा भवन्तीति वाक्येनेत्यवगम्यताम् ।
प्राणादिजनितज्ञानादानन्दः पर एव सन् ॥ ४७१ ॥
ब्रह्म वेदान्तवेद्यं स्याद्योनिः सर्वस्य कारणम् ।

यद्वा वेदस्य योनिः स्यात्ताद्‌ग्रूपः स्वयं भवेत् ॥ ४७२ ॥

**स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत्स च भूतꣳ स भव्यं जिज्ञासक्लृप्त ऋतजा रयिष्ठाः श्रद्धा सत्यो महस्वान्तमसोपरिष्टात्**

स्तोतुं संन्यासमेवोक्तं तत्प्राप्तज्ञानसंस्तुतिः ।
संन्यासपूर्वकं ज्ञानं संपादयति यो नरः ॥ ४७३ ॥

तदिति; तेन संन्यासेन प्राप्तं तत्त्वज्ञानं यस्य तस्य नरस्य स्तुतिः क्रियत इत्यर्थः ।

स एव सर्वरूपः सन् पञ्चात्मा पञ्चधा भवेत् ।
पञ्चविंशतिरूपः स्यादित्यर्थः परिकीर्तितः ॥ ४७४ ॥
शब्दादिपञ्चकं चैव पृथिव्यादिकपञ्चकम् ।
ज्ञानकर्मेन्द्रियाणां द्वे तथा प्राणादिपञ्चकम् ॥ ४७५ ॥
एतावद्वस्तुरूपः स्याद्यद्वा पञ्चात्मभिर्युतः ।
पञ्चधा वर्तते तच्च पुराणे परिकीर्तितम् ॥ ४७६ ॥
भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।
आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥ ४७७ ॥

इत्युक्तमित्यर्थः ।

येन ब्रह्मस्वरूपेण नरेण सकलं जगत् ।
प्रोतं प्रकर्षतः स्यूतं सूत्रे मणिगणा इव ॥ ४७८ ॥
पृथिवीत्यादिना सर्वं तदेव स्फुटमुच्यते ।
व्यापी स एव सकले वर्तमानमिदं जगत् ॥ ४७९ ॥

तत्त्वविद्यातिरेकेण तत्त्वदृष्ट्या जगन्न हि ।
अतीतं च स एवेदं भव्यं भावि जगच्च सः ॥ ४८० ॥
दृश्यते देहरूपोऽयं जगद्रूपो न हीति चेत् ।
जिज्ञासया विचारेण सर्वात्मत्वेन निश्चितः ॥ ४८१ ॥
ऋतं प्रामाणिकं ज्ञानं जातः सर्वात्मकस्ततः ।

ततः; ज्ञानेनेत्यर्थः ।

पूर्वपक्षेष्वपास्तेषु जिज्ञासासमये पुनः ॥ ४८२ ॥
सिद्धान्तज्ञानतो जातः सर्वात्मा तत्त्वविन्नरः ।
रयिर्गुरूपदेशाख्यं धनं तत्रैव तिष्ठति ॥ ४८३ ॥
न तूपदेशशून्यानां तत् क्वचित्प्रतिभासते ।
ईदृक्स्वरूपज्ञानस्य श्रद्धालभ्यत्वतः पुमान् ॥ ४८४ ॥
श्रद्धैव सत्यब्रह्मात्मा स्वप्रकाशोऽत एव सः ।
अज्ञानेन वियुक्तत्वात्तदुपर्यपि वर्तते ॥ ४८५ ॥

**ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्**

न्यासपूर्वज्ञानवन्तं श्रुत्वाह ज्ञानसत्फलम् ।
आरुणे त्वं तमात्मानं मनसा हृदयात्मना ॥ ४८६ ॥
हृदा नियमितत्वेन हृदेति परिकीर्त्यते ।

हृदा; हृत्पद्मेनेत्यर्थः ।

एवमुक्तप्रकारेण संन्यासोत्तमहेतुतः ॥ ४८७ ॥
ज्ञात्वा विद्वाञ्ज्ञानयुक्तः पुनर्मृत्युं न चाप्नुहि ।
वर्तमानशरीरे च ज्ञानिनः पतिते सति ॥ ४८८ ॥
जन्माभावात्पुनर्मृत्युर्नास्तीत्यर्थः प्रकीर्तितः ।

**तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ।**

बहु प्रशस्तं संन्यासमुपसंहरतेऽधुना ॥ ४८९ ॥
न्यासो यतोऽन्तरङ्गं स्यात्साधनं तत्त्ववेदने ।
तस्मात्सत्यादितपसां न्यासं सन्तोऽधिकं जगुः ॥ ४९० ॥

**वसुरण्यो विभूरसि प्राणे त्वमसि संधाता ब्रह्मन् त्वमसि विश्वसृक्तेजोदास्त्वमस्यग्नेर्वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणे त्वा महसे**

न्यासोर्ध्वं प्रणवेनात्मसमाधिर्यो विधीयते ।
तस्मिन् विघ्ननिवृत्त्यर्थं प्राहान्तर्यामिसंस्तुतिम् ॥ ४९१ ॥

आत्मेति ; आत्मनि समाधिरित्यर्थः ।

अनुग्रहाय मे ब्रह्मन्नन्तर्यामिञ्जगत्पते ।
वस्तुतत्त्वोपदेष्टासि वसुरण्यो विभूरसि ॥ ४९२ ॥
विविधं जायमानोऽसि विराडादिकरूपतः ।
प्राणे वाय्वात्मके जीवे त्वं संयोजयितासि च ॥ ४९३ ॥
विश्वसृक्सकलव्यापी त्वमस्यग्नेः प्रकाशदः ।
द्युलोकवर्तिसूर्यस्य वर्चोदास्त्वं प्रकाशदः ॥ ४९४ ॥
तथा चन्द्रमसोऽसि त्वं प्रकाशद्रविणप्रदः ।

प्रकाशेति ; प्रकाशरूपधनप्रद इत्यर्थः ।

उपयामगृहीतोऽसि सोमः सन्यागभूमिषु ॥ ४९५ ॥
पृथ्वी वा उपयामोऽयं श्रुतिसंकीर्तितत्वतः ।
गृहीतः सोमरूपः सन्मृद्दारुमयपात्रतः ॥ ४९६ ॥

श्रुतीति; "उपयामगृहीतोऽसीत्याहेयं वा उपयामः" (तैत्तिरीयसंहिता ६-५-८) इत्युक्त इत्यर्थः। तमेव स्पष्टयति—

त्वामेवं सर्वकर्तारं महसे ब्रह्मणे भजे।
ब्रह्माभिव्यक्तये देवं संसेवे परमेश्वरम् ॥ ४९७ ॥

**ओमित्यात्मानं युञ्जीत**

ईशस्तुत्या गताघस्य समाधिस्तु विधीयते।
त्रिमात्रं कीर्तयंस्तारं सर्ववेदान्तनिश्चितम् ॥ ४९८ ॥
समादध्यात्परात्मानं स्वरूपत्वेन चेतसि।

अन्तर्यामिस्तुत्या परिहृतविघ्नस्य संन्यासिन इत्यर्थः। निश्चितं; परमात्मानमित्यन्वयः।

**एतद्वै महोपनिषदं देवानां गुह्यं**

समाधिसाधनं तारं संस्तौति सकलोत्तमम् ॥ ४९९ ॥
तारस्वरूपमेवेदं महोपनिषदुच्यते।
यस्योपनिषदो वन्द्यो भवन्ति प्रतिपादिकाः ॥ ५०० ॥
महोपनिषदेतत्स्यात्सर्वे वेदा इति श्रुतेः।
देवानां वासवादीनां गुह्यं गोप्यमिदं भवेत् ॥ ५०१ ॥
शमादिवर्जितो यः स्यात्तस्मै नोपदिशन्ति ते।

**य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद् ब्रह्मणो महिमानम्**

एतत्समाधिजन्यस्य ज्ञानस्य फलमुच्यते ॥ ५०२ ॥
संन्यासानन्तरं यस्तु प्रणवेन परात्मनः।
समाधिमाचरन्नेवं महावाक्योक्तरीतितः ॥ ५०३ ॥

ब्रह्मतत्त्वं विजानाति सोऽपरिच्छिन्नवस्तुनः ।
महिमानमवाप्नोति तत्त्वविज्ञानतो ह्ययम् ॥ ५०४ ॥
जीवत्वभ्रमनाशेन ब्रह्मताविर्भवे सति ।
जीवन्मुक्तो भवेद्विद्वानित्यस्यार्थः प्रकीर्तितः ॥ ५०५ ॥
प्रारब्धस्य क्षये भोगाच्छरीरे पतिते सति ।
तस्माज्ज्ञानादविद्याया लेशेनापि विवर्जितम् ॥ ५०६ ॥
मुख्यं यद्ब्रह्म तस्यैव महिमानं समश्नुते ।
विदेहमुक्तो भवतीत्यस्यार्थः परिकीर्तितः ॥ ५०७ ॥

**इत्युपनिषत् ॥**

संन्यासपूर्विकां विद्यामुपसंहरतेऽधुना ।
इत्येवं कथिता विद्या भवत्युपनिषन्मता ॥ ५०८ ॥
रहस्यविद्या भवतीत्येवमर्थः प्रकीर्तितः ।

इति त्रिषष्टितमोऽनुवाकः

ज्ञानान्तरङ्गहेतुत्वान्न्यासस्यैवोक्तरीतितः ॥ ५०९ ॥
स एव युक्तो जिज्ञासोर्न तु कर्मेति कीर्तितम् ।
तर्हि साक्षात्कृतौ कर्म क्रियतामिति शङ्कते ॥ ५१० ॥
तच्छङ्कापरिहाराय यागरूपत्वमुच्यते ।
लौकिकव्यवहाराणां सर्वेषां तत्त्ववेदिनः ॥ ५११ ॥
यागाधिकारशङ्कास्ति न हि यागस्य विद्यते ।
अतोऽग्रिमानुवाकस्य पूर्वभागेण योगिनः ॥ ५१२ ॥
यागद्रव्यतयाङ्गानि पठ्यन्ते सकलान्यपि ।

**तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निः**

**शमयिता दक्षिणा वाग्घोता प्राण उद्गता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्**

तस्य संन्यासिनो ब्रह्म साक्षात्कृतवतः सतः ॥ ५१३ ॥
जीवन्मुक्तस्य यो यज्ञस्तस्यात्मा साक्षिलक्षणः ।
स एव यजमानः स्यात्तत्स्वामित्वेन हेतुना ॥ ५१४ ॥
श्रद्धाख्या चित्तवृत्तिर्या सा पत्नीत्यादि योज्यताम् ।
यो दमाख्यः शमयिता सर्वाशोपशमावहः ॥ ५१५ ॥
चित्तवृत्तिविशेषोऽस्ति स भवेदत्र दक्षिणा ।

सर्वेति ; सर्वेन्द्रियोपशमकारीत्यर्थः ।

होत्रादिकस्वरूपत्वं वागादीनां विचिन्त्यताम् ॥ ५१६ ॥

**यावद्ध्रियते सा दीक्षा यदश्नाति यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातर्मध्यंदिनं च तानि सवनानि**

ज्योतिष्टोमाङ्गभूता या क्रिया तद्रूपतोच्यते ।
योगिनो व्यवहारस्य त्वनुवाकान्यभागतः ॥ ५१७ ॥

द्वितीयभागमवतारयति—ज्योतिष्टोमेति । अन्येति ; द्वितीयभागेन त्वित्यर्थः ।

भोजनाकरणेनैव यावत्क्षुद्धार्यतेऽमुना ।
सा दीक्षासंज्ञसंस्कारो धृतिरित्यवगम्यताम् ॥ ५१८ ॥
हविरादिकरूपत्वं भोजनादेर्विबुध्यताम् ।

**ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः**

अथो तृतीयभागेन जीवन्मुक्तस्य योगिनः ॥ ५१९ ॥
तत्तत्कालविशेषेण तत्तद्यागात्मतोच्यते ।

तृतीयभागमवतारयति—अथो इति ।

अत्र संवत्सराश्चेति श्रूयमाणं चयोगतः ॥ ५२० ॥
संवत्सराश्चेत्येताभ्यां चकाराभ्यां श्रुताविह ।
स्यादिदावत्सरादीनां त्रयाणां च समुच्चयः ॥ ५२१ ॥
प्रभवादिषु चैकैकं पञ्चकं युगशब्दितम् ।
संवत्सरादिसंज्ञेयं क्रमात्तस्मिन्युगे भवेत् ॥ ५२२ ॥

तदुक्तं कालनिर्णये—

"चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ।
संपरीदान्विदित्येतच्छब्दपूर्वास्तु वत्सराः ॥"

इति ।

ये द्विरात्रातिरात्राद्यास्त एवाहर्गणा मताः ।
सर्वस्वदक्षिणाकं स्यात्सर्ववेदसशब्दितम् ॥ ५२३ ॥
अहोरात्रादिकालेन समस्तेनोपलक्षितम् ।
यदायुर्योगिनस्तस्मादत्रैतच्छब्दकीर्तितम् ॥ ५२४ ॥
आयुस्तद्दक्षिणोपेतं सत्रमित्यर्थ ईरितः ।

**एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते**

**पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् ॥**

चतुर्थभागेनैतस्य सर्वयज्ञात्मकं मुनिम् ॥ ५२५ ॥
उपासीनस्य मर्त्यस्य क्रममुक्तिरुदीर्यते ।

अनुवाकान्त्यभागमवतारयति—चतुर्थेति ।

योगीश्वरस्य चरितं यज्जरामरणावधि ॥ ५२६ ॥
तद्वेदोक्तोऽग्निहोत्रादिसत्रान्ताखिलकर्म हि ।
इत्युपासनशीलः सन् मृतः स्यादुत्तरायणे ॥ ५२७ ॥
स देवतानामैश्वर्यं संप्राप्य तदनन्तरम् ।
भावनातारतम्येन रवेस्तादात्म्यमश्नुते ॥ ५२८ ॥
अथोपासनशीलो यो म्रियते दक्षिणायने ।
सोऽग्निष्वात्तादिकैश्वर्यं प्राप्यैतीन्दुसरूपताम् ॥ ५२९ ॥

एतीति; इन्दुसायुज्यमेतीत्यर्थः ।

महिमानावनुभवन्नेतावादित्यसोमयोः ।
विद्वान्हिरण्यगर्भं च तल्लोकस्थोपदेशतः ॥ ५३०

तल्लोकस्थेति; तल्लोकवासिनामुपदेशत इत्यर्थः ।

तत्साक्षात्कृतिरूपं च जयं प्राप्नोत्ययं द्विजः ।

तदिति; हिरण्यगर्भसाक्षात्काररूपमित्यर्थः ।

तत्साक्षात्कारतो विप्रस्तल्लोकस्थवपुःक्षयात् ॥ ५३१ ॥
तल्लोकं प्राप्य तत्रास्य महिमानं समश्नुते ।

शरीरपातादूर्ध्वमिति शेषः। तल्लोकम्; हिरण्यगर्भलोकमित्यर्थः। अस्य; हिरण्यगर्भस्यैश्वर्यम्।

तत्रोत्पन्नात्परेशस्य साक्षात्कारात्स च द्विजः ॥ ५३२ ॥
तल्लोकनाशादूर्ध्वं यत्सत्यज्ञानादिलक्षणम्।
ब्रह्म तस्य महत्त्वाख्यं महिमानं समश्नुते ॥ ५३३ ॥
इतीत्यनेन विद्यायास्तद्ग्रन्थस्योपसंहृतिः।

तद्ग्रन्थस्येति; तत्प्रतिपादकग्रन्थस्येत्यर्थः।

तैत्तिरीयेऽस्ति पुंविद्या तस्यैवमिति वाक्यतः ॥ ५३४ ॥
पुरुषो वेति वाक्येन शाखायां ताण्डिनामपि।
भेदकस्योपलम्भेन स्वविभिन्नैव युज्यते ॥ ५३५ ॥
पुंयज्ञयोस्ताण्डिनां हि सामानाधिकरण्यगीः।
न तथा तैत्तिरीये स्यात्तत्र षष्ठ्योः श्रुतत्वतः ॥ ५३६ ॥
सामानाधिकरण्ये च षष्ठ्योर्व्याहतिरेव हि।
विदुषो यजमानत्वं यज्ञत्वं हि विरुध्यते ॥ ५३७ ॥

विदुषो यो यज्ञस्तस्य यज्ञस्यात्मेति व्यधिकरणे षष्ठ्यौ। अन्यथा विद्वानेव यज्ञः; स एव यजमान इति व्याहतिः स्यात्। ताण्डिशाखायां तु "पुरुषो वा व यज्ञः" इति सामानाधिकरण्यम्। अतो भेदकोपलम्भाद्भेद इत्यर्थः।

यदात्मयजमानादि श्रुतं तत्ताण्डिनां न हि।
आयुषस्त्रिविधस्यापि सवनत्रयरूपता ॥ ५३८ ॥
इत्यादि ताण्डिनां यत्तु न हि तत्तैत्तिरीयके।
मरणावभृथत्वादि किंचित्साम्यप्रबाधनात् ॥ ५३९ ॥

विद्ययोर्भेद एवातो न्याय्यो नैव त्वभिन्नता ।
किंच नोपासनमिदं तैत्तिरीये प्रकीर्तितम् ॥ ५४० ॥
किं तर्हि ब्रह्मविद्यायाः प्रशंसा परिकीर्त्यते ।
तस्माद्विद्यैक्यशङ्काया नावकाशोऽस्ति कश्चन ॥ ५४१ ॥
क्रममुक्तिफलं त्वस्मिन्ननुवाके प्रकीर्तितम् ।
तत्त्वज्ञसेवासंभूतमित्यशेषं च मङ्गलम् ॥ ५४२ ॥

इति चतुःषष्टितमोऽनुवाकः

विद्यारण्यमुनिप्रोक्तबृहद्व्याख्यानुसारतः ।
पुरुषोत्तमतीर्थेन ग्रन्थविस्तरभीतितः ॥ ५४३ ॥
याज्ञिक्यां कतिचिन्मन्त्रा व्याख्याताः पद्यरूपतः ।
यथोपयोगमेवात्र संग्रहेण यथामति ॥ ५४४ ॥
विद्यारण्यैः समस्तेयं व्याख्याता याज्ञिकी शुभा ।
आरभ्य रुद्रगायत्रीं द्राविडः पाठ आदृतः ।
ततः पूर्वं तु तैः सर्वे तत्तत्पाठाः समादृताः ॥ ५४५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशिवरामानन्दतीर्थशिष्यश्रीपुरुषोत्तमानन्दतीर्थविरचितं याज्ञिक्युपनिषद्विवरणं समाप्तम् ।

# उपनिषद्वाक्यानामनुक्रमणी

---

*Note—*

Read यस्मात् in line 12, page 27.

Read अनुवाकः for अध्यायः on pages 46 to 48.

Add अष्टचत्वारिंशोऽनुवाकः between the lines 10 and 11 on page 50.

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, 20, India)

| | | Rs. | A. |
|---|---|---|---|
| 1910—1. | A Preliminary List of the Saṁskṛt and Prākṛt MSS. in the Adyar Library. (Saṁskṛt-Devanāgarī). Boards ... Rs. 1-8. Cloth ... | 2 | 0 |
| 1912—2. | A Descriptive Catalogue of the Saṁskṛt MSS. in the Adyar Library. *By* F. O. Schrader, Vol. I, Upaniṣads. Cloth ... | 5 | 0 |
| 3. | The Minor Upaniṣads (Saṁskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Vol. I.—Saṁnyāsa. Cloth ... | 10 | 0 |
| 1916—4. | Ahirbudhnya-Saṁhitā of the Pāñcarātra Āgama (Saṁskṛt). 2 Vols. Cloth ... | 10 | 0 |
| 5. | Introduction (English) to the Pāñcarātra and the Ahirbudhnya Saṁhitā. *By* F. O. Schrader. Cloth ... | 3 | 0 |
| 1920—6. | Yoga Upaniṣads 20—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1921—7. | Sāmānya Vedānta Upaniṣads 24—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1923—8. | Vaiṣṇava Upaniṣads 14—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 4 | 0 |
| 1925—9. | S'aiva Upaniṣads 15—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 3 | 0 |
| 10. | S'ākta Upaniṣads 8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 2 | 8 |
| 1926—11. | Catalogue of Samskṛt MSS. in the Adyar Library (Revised). 2 Vols. Each ... | 3 | 12 |
| 1929—12. | Saṁnyāsa Upaniṣads 17—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* T. R. Chintamani, and the Paṇḍits of the Adyar Library ... | 4 | 0 |
| 13. | Rukmiṇīkalyāṇa-Mahākāvya by Rājacūḍāmaṇi-Dīkṣita. Edited *by* the Paṇḍits of the Adyar Library and T. R. Chintamani ... | 2 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 1933—14. | UNPUBLISHED MINOR UPANIṢADS with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* the Paṇḍits of the Adyar Library. ... | 5 | 0 |
| 1936—15. | TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* the Paṇḍits of the Adyar Library | | |
| | Īs'a to Aitareya, Vol. I ... | 4 | 8 |
| | Chāndogya and Bṛhadāraṇyaka, Vol. II ... | 6 | 0 |
| | Vols. 1 and 2, Boards ... | 9 | 8 |
| 1937—16. | MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 2 | 0 |
| 1938—17. | SAṀGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 18. | PRATYABHIJÑĀHṚDAYA (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker ... | 3 | 0 |
| 19. | BHAVASAṄKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṀKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha —with English Translation *by* Paṇḍit N. Aiyaswami Sastri ... | 2 | 4 |
| 20. | YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 21. | * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga : | | |
| | Parts 1 and 2. Nature and Man ... | 9 | 0 |
| | Part 3. God—From Humanity to Divinity ... | 2 | 8 |
| | Part 4. Some Practical Applications ... | 2 | 8 |
| 1939—22. | ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja. Vol. I ... | 6 | 0 |
| 1940—23. | THE NUMBER OF RASAS *by* V. Raghavan, Department of Saṁskṛt, University of Madras ... | 3 | 0 |
| 1941—24. | SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 25. | BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of S'rī Upaniṣad-Brahmayogin (Saṁskṛt). Edited *by* the Paṇḍits of the Adyar Library ... | 4 | 0 |
| 26. | SĀMAVEDA-SAṀHITĀ—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja ... | 6 | 0 |

* *Published under the auspices of the Adyar Library Association.*

| | | Rs. | A. |
|---|---|---|---|
| 27. | RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V. Rangaswami Aiyangar ... | 3 | 8 |
| 28. | VARIVASYĀRAHASYA of Bhāsurānandanātha (Second Edition—Reprinted, 1948). Edited *by* Paṇḍit S. Subrahmanya Sastri (with English Translation Etc.) ... | 5 | 0 |
| 29. | VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar and A. N. Krishna Aiyangar ... | 15 | 0 |
| 30. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. I. (Adhyāya 1) ... | 9 | 0 |
| 1942—31. | CATALOGUE OF THE ADYAR LIBRARY, Western Section. Part 1 ... | 5 | 0 |
| 32. | ĀLAMBANAPARĪKṢĀ AND VṚTTI *by* Diṅnāga. Edited with English translation, Tibetan text etc. *by* Paṇḍit N. Aiyaswami Sastri ... | 3 | 0 |
| 33. | SOME CONCEPTS OF ALAṀKĀRA-S'ĀSTRA *by* V. Raghavan, University of Madras ... | 4 | 0 |
| 34. | VEDĀNTAPARIBHĀṢĀ—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri ... | 2 | 12 |
| 35. | DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K. Madhava Krishna Sarma. Vol. I—Vedic ... | 15 | 0 |
| 36. | S'RĪ PĀÑCARĀTRA-RAKṢĀ of S'rī Vedānta-Des'ika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya ... | 4 | 8 |
| 37. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2 ... | 6 | 0 |
| 38. | CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... | 4 | 8 |
| 1943—39. | PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P. N. Srinivasachari ... | 10 | 0 |
| 40. | VĀDĀVALĪ OF JAYATĪRTHA. Edited with English translation and Notes *by* P. Nagaraja Rao ... | 4 | 0 |
| 41. | SPINOZIAN WISDOM OR NATURAL RELIGION *by* James Arther ... | 2 | 12 |
| 42. | UṢĀṆIRUDDHA of Rāmapāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri and Prof. C. Kunhan Raja ... | 3 | 8 |

| | | Rs. A. |
|---|---|---|
| 1944—43. | SAMGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Simhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. II. (Adhyāyas 2—4) ... | 9 0 |
| 44. | ĀS'VALĀYANAGṚHYASŪTRA—With the Commentaries of Devasvāmin and Nārāyaṇa. Edited *by* Svami Ravi Tirtha. Vol. I (Adhyāya 1) ... | 6 4 |
| 45. | ALPHABETICAL INDEX OF SANSKRIT MANUSCRIPTS in the Adyar Library ... | 10 0 |
| 46. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 3 ... | 7 0 |
| 47. | ĀTMAN IN PRE-UPANIṢADIC VEDIC LITERATURE *by* H. G. Narahari ... | 8 0 |
| 1945—48. | RĀGAVIBODHA OF SOMANĀTHA with his own commentary Viveka. Edited by Paṇḍit S. Subrahmanya Sastri ... | 6 0 |
| 49. | ACYUTARĀYĀBHYUDAYA OF RĀJANĀTHA ḌIṆḌIMA—Sargas 7 to 12. Edited *by* A. N. Krishna Aiyangar ... | 3 8 |
| 50. | ANCIENT WISDOM OF WALES *by* D. Jeffrey Williams ... | 1 4 |
| 51. | SAMGĪTARATNĀKARA OF S'ĀRṄGADEVA—Vol. I. Chapter 1. English Translation *by* Prof. C. Kunhan Raja. Cloth Rs. 4-8. Boards ... | 4 0 |
| 52. | VAIṢṆAVA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti ... | 10 0 |
| 1946—53. | NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Svami Ravi Tirtha. (Vol. I – Books i and ii)... | 4 0 |
| 54. | PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāmapāṇivāda. Edited *by* Prof. C. Kunhan Raja and Paṇḍit K. Ramachandra Sarma ... | 4 4 |
| 55. | SPHOṬAVĀDA OF NĀGES'A—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 3 12 |
| 1947—56. | THE CRADLE OF INDIAN HISTORY *by* C. R. Krishnamacharlu ... | 3 8 |
| 57. | UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya ... | 1 12 |
| 58. | ORIGIN AND SPREAD OF THE TAMILS (Sankara-Parvati Lectures, 1940, University of Madras) *by* V. R. Ramachandra Dikshitar ... | 3 8 |
| 59. | JĪVĀNANDANAM OF ĀNANDARĀYAMAKHIN. Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar with his own Commentary ... | 20 0 |

| | | Rs. | A. |
|---|---|---|---|
| 60. | DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* Paṇḍit V. Krishnamacharya, Vol. VI—Grammar, Prosody and Lexicography ... | 25 | 0 |
| 61. | ṚGVEDAVYĀKHYĀ of Mādhava, Vol. II, edited by Prof. C. Kunhan Raja ... | 15 | 0 |
| 62. | DESCRIPTIVE CATALOGUE OF PALI MSS. in the Adyar Library, *by* Dr. E. W. Adikaram ... | 6 | 0 |
| 1948—63. | HARICARITA OF PARAMES'VARA—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 5 | 0 |
| 64. | GAUTAMA-DHARMASŪTRA-PARIS'IṢṬA (Second Pras'na)—Edited *by* A. N. Krishna Aiyangar ... | 9 | 0 |
| 65. | SAṀKALPASŪRYODAYA OF S'RĪ VEṄKAṬANĀTHA with the Commentaries Prabhāvilāsa and Prabhāvalī. Edited *by* Paṇḍit V. Krishnamacharya Part I ... | 15 | 0 |
| | Part II ... | 15 | 0 |
| | Reprint of No. 28—VARIVASYĀRAHASYA of Bhāsurānandanātha—Edited by Paṇḍit S. Subrahmanya Sastri (with English translation, Etc.) ... | 5 | 0 |
| 1949—66. | INDIAN CAMERALISM (A Survey of some aspects of Arthas'āstra) *by* K. V. Rangaswami Aiyangar ... | 7 | 0 |
| | Second Edition—Revised and Enlarged—of No. 21—WHERE THEOSOPHY AND SCIENCE MEET (Parts 1 and 2, Nature and Man) by a body of Experts. Edited *by* Prof. D. D. Kanga ... | 9 | 0 |
| 67. | TIRUKKUṚAḶ OF TIRUVAḶḶUVAR—(In Roman Transliteration) with English Translation by Prof. V. R. Ramachandra Dikshitar ... | 3 | 0 |
| 68. | TIRUKKUṚAḶ OF TIRUVAḶḶUVAR, with English Translation *by* Prof. V. R. Ramachandra Dikshitar ... | 3 | 0 |
| 69. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 4 (French) ... | 1 | 12 |
| 70. | ALAṀKĀRASAṀGRAHA by Amṛtānandayogin. Edited *by* Paṇḍit V. Krishnamacharya and Paṇḍit K. Ramachandra Sarma ... | 9 | 0 |
| 71. | YĀJÑIKYUPANIṢAD VIVARAṆAM BY PURUṢOTHAMĀNANDA TIRTHA—Edited *by* Paṇḍit V. Krishnamacharya and Paṇḍit K. Ramachandra Sarma ... | 2 | 8 |

Rs. A

## PAMPHLETS

### 1939

VARIANT VERSION OF THE EKĀGNIKĀṆḌA. (Reprinted from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma ... 0 3

### 1940

RĀJAMṚGĀṄKA OF BHOJA. (Reprinted from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma 0

### 1942

ṢAṬPAÑCĀŚIKĀ, a Śilpaśāstra manual. (Reprinted from the Adyar Library Bulletin. February, 1942). Edited *by* K. Madhava Krishna Sarma ... 0

PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprinted from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma ... 0

A LIST OF MANUSCRIPTS. (Reprinted from the Adyar Library Bulletin, October, 1942) ... 1

THE PATH OF GREATNESS. (Reprinted from the Adyar Library Bulletin, December, 1942), *by* Dr. G. S. Arundale ... 0

### 1943

VIŚEṢĀMṚTA of Tryambaka Miśra. (An orthographical lexicon), Edited *by* H. G. Narahari. (Reprinted from the Adyar Library Bulletin, May, 1943) ... 0 1

A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Prof. C. Kunhan Raja. (Reprinted from the Adyar Library Bulletin, October, 1940, May and October, 1943) ... 0

### 1946

DHARMACAURYARASĀYANA OF GOPĀLAYOGĪNDRA—Edited *by* H. G. Narahari. (Reprinted from the Adyar Library Bulletin, October and December, 1946) ... 1

### 1948

SAṀSKṚTAGRANTHIVIGHAṬANA—*by* Prof. C. Kunhan Raja ... 0

CANDRAVĀKYAS OF VARARUCI—Edited *by* Prof. C. Kunhan Raja with Appendices ... 2

BHĀRATA-RĀṢṬRA-SAṄGHAṬANĀ (Indian Constitution in Sanskrit verses)—a sample—*by* Prof. C. Kunhan Raja ... 1

Rs. A.

LANGUAGE PROBLEM IN INDIA—(Reprint from the Adyar Library Bulletin, Vol. XII, Part 4, December, 1948.) ... 1 0

SANSKRIT IN INDIA—*by* G. Srinivasa Murti. (Reprint from the Adyar Library Bulletin, Vol. XII, Part 3, October, 1948) ... 1 0

INFLUENCE OF INDIAN THOUGHT ON FRENCH LITERATURE—*by* Prof. Louis Renou. (Reprint from the Adyar Library Bulletin, Vols. XII and XIII) ... 0 12

## 1949

THE FUTURE ROLE OF SANSKRIT (Sanskrit Language)—*by* C. Kunhan Raja. (Reprint from the Adyar Library Bulletin, Vol. XIII, Part 1, February, 1949) ... 0 12

THE FUTURE ROLE OF SANSKRIT (Sanskrit Literature, Sanskrit Scholarship and Sanskrit Scholars) *by* Louis Renou and C. Kunhan Raja ... 1 8

DAS'AKUMĀRAKATHĀSĀRA OF APPAYĀMĀTYA—Edited *by* H. G. Narahari ... 1 0

BRAHMASŪTRABHĀṢYA-SIDDHĀNTASAṀGRAHA, *by* Sri Upaniṣad-brahmayogin—Edited by Pandit V. Krishnamacharya. (Reprint from the Adyar Library Bulletin, Vol. XIII, Parts 2 and 3) ... 1 8

INDIA'S CULTURAL ROLE IN THE WORLD *by* C. Kunhan Raja (Reprint from the Adyar Library Bulletin, Vol. XIII, Part 4...

## IN THE PRESS

CATURDAS'ALAKSAṆĪ OF GADĀDHARA with three commentaries. Vol. II *by* Paṇḍit N. Santanam Aiyar.

ĀPASTAMBASMṚTI—Edited *by* A. N. Krishna Aiyangar.

SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol III.

HORĀS'ĀSTRA—with the commentary Apūrvārthapradars'ikā *by* A. N. Srinivasaraghava Aiyangar.

SĀLISTAMBASŪTRA—Restored from Tibetan and Chinese Sources—*by* Paṇḍit N. Aiyaswami Sastri.

SAṀGĪTARATNĀKARA, English Translation—Vol. II, *by* Prof. C. Kunhan Raja.

DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* H. G. Narahari, Vol. V—Poetry, Drama and Poetics.

ARISTOTLE'S KATHARSIS AND BHARATA'S STHĀYIBHĀVAS—*by* Prof. C. Kunhan Raja.

LANGUAGE—BARRIER OR BRIDGE—*by* A. Sita Devi.

PĀDAVIDHĀNA OF S'AUNAKA with Bhāṣya—Edited *by* H. G. Narahari.

INSCRIPTIONS OF PRIYADARS'IN—with English Translation *by* G. Ṣrinivasa Murti and A. N. Krishna Aiyangar.

## READY FOR THE PRESS

ĀS'VALĀYANAGṚHYASŪTRA with the Commentaries of Devasvāmin and Nārāyaṇa. Vol. II. Edited *by* Svami Ravi Tirtha.

NYĀYAKUSUMĀÑJALI OF UDAYANA with the Commentary of Varadarāja. Edited *by* Prof. C. Kunhan Raja.

CATURDAS'ALAKṢAṆĪ OF GADĀDHARA—with Commentaries—Edited *by* Paṇḍit N. Santanam Aiyar, Vol. III.

PAKṢATĀ OF GADĀDHARA—with four commentaries Edited *by* Paṇḍit N. Santanam Aiyar.

SIDDHĀNTALAKṢAṆAM OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

AVAYAVA OF GADĀDHARA—with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

SĀMĀNYANIRUKTI OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

VYUTPATTIVĀDA OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

S'AIVA AND S'ĀKTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

TEN MAJOR UPANIṢADS—English Translation *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

DESCRIPTIVE CATALOGUE OF SANSKRIT MSS. in the Adyar Library, *by* Pandit V. Krishnamacharya, Vol, IX—Mīmāṁsā and Advaita-Vedānta.




*Agents for our publications :*

**THE THEOSOPHICAL PUBLISHING HOUSE**

**Adyar, Madras 20**